THE

# CHOWKHAMBÂ SANSKRIT SERIES,

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

## NO. 411.

विद्वच्छिरोमणिश्रीवोपदेवप्रणीतं

# हरिलीलामृतम्

श्रीमत्परमहंसमधुसूदनसरस्वतीप्रणीतटीकासहितम्।

तत्प्रणीतपरमहंसप्रियाख्यव्याख्यायुतं

श्रीमद्भागवतस्याद्यं पद्यं च ।

THE

# HARĪLILĀMṚTAM

By

S'RĪ BŌPADEVA

With

A Commentary by S'rī Madhusūadana Saraswati

and

## S'RIMAD BHĀGAVAT [FIRST S'LŌKA]

With

THE PARAMAHAMSAPRĪYĀ COMMENTARY

By

THE SAME COMMENTATOR.

*Edited with Introduction etc.,*

*By*

SAHITYOPADHYAYA

PARAJULI PANDIT DEVI DATTA UPADHYAY

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT SERIES OFFICE.

*Vidya Vilas Press Benares City.*

1933.

॥ श्रीः ॥

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः—४११

THE
CHOWKHAMBA SANSKRIT SERIES
NO. 411.

THE

# HARILĪLĀMṚTAM

By

S'RĪ BŌPADEVA

With

*A Commentary by S'rī Madhusudana Saraswatī*

and

# S'RĪMAD BHĀGAVATA (FIRST S'LŌKA)

*With*

THE PARAMAHAMSAPRĪYĀ COMMENTARY

*By*

**THE SAME COMMENTATOR.**

*Edited with Introduction etc.,*

*By*

SAHITYOPADHYAYA
PARAJULI PANDIT DEVI DATTA UPADHYAYA
Professor, Rajkiya Sanskrit Pathashala, Nepal

JAI KRISHNADAS-HARIDAS GUPTA,
*The Chowkhamba Sanskrit Series office,*
*Benares City.*

1933.

❀ श्रीः ❀

चौखम्बा–संस्कृत–ग्रन्थमाला

ग्रन्थ–संख्या ७१

नं० ४११.

विद्वच्छिरोमणिश्रीवोपदेवप्रणीतं

# हरिलीलामृतम्

श्रीमत्परमहंसमधुसूदनसरस्वतीप्रणीतटीकासाहितम् ।

तत्प्रणीतपरमहंसप्रियाख्यव्याख्यायुतं

## श्रीमद्भागवतस्याद्यं पद्यं च।

नेपालस्थराजकीयसंस्कृतप्रधानपाठशालाध्यापकैः

साहित्योपाध्यायैः पराजुल्युपनामकपण्डितप्रवर-

श्रीदेवीदत्तोपाध्यायैः संशोधितम् ।

प्रकाशकः—

जयकृष्णदास–हरिदास गुप्तः-

चौखम्बा संस्कृत सीरिज़ आफिस,

विद्याविलास प्रेस, बनारस सिटी ।

१९९०

ॐ नमः शिवाय ।

# भूमिका ।

अथेदं प्रकाश्यते पुराणमूर्धन्यस्याखिलागमप्रपाणकस्वादुरसाऽऽस्राविणः श्रीमद्भागवतस्यानुक्रमणिकात्मकं सटीकं हरिलीलाविवरणापरपर्यायं हरिलीलामृतं नाम श्रीमद्भागवतगूढतत्त्वप्रतिपादकं प्रकरणम् । यत्र प्रथमं भागवतार्थं, तस्य हरिलीलाभिधायितां, तत्र प्रमाणलक्षणे चोपन्यस्य, द्वादशसु स्कन्धेषु प्रथमस्कन्धे वक्तृश्रोतॄणां, द्वितीये श्रवणविधेः, तृतीये सर्गस्य, चतुर्थे विसर्गस्य, पञ्चमे स्थानस्य, षष्ठे पोषणस्य, सप्तम ऊतेः, अष्टमे मन्वन्तरस्य, नवम ईशानुकथायाः, दशमे निरोधस्य, एकादशे मुक्तेः, द्वादश आश्रयस्य निरूपणपरत्वमभिधाय प्रतिस्कन्धमध्यायप्रकरणसङ्ख्ये निरुच्य प्रत्यध्यायं प्रतिपाद्यनिरूपणं च सम्यक् संन्यवेशि । शब्दतोऽल्पतरोऽप्ययं निबन्ध आयासमन्तराऽल्पीयसा कालेन श्रीमद्भागवततत्त्वं जिज्ञासमानानामलसमतीनां मनुजसंहतीनां, सप्ताहं वाचयतां विपश्चितां चोपकारातिशयं नूनमाधास्यतीति मनीषया संमुद्रितः । ईदृशानां ग्रन्थरत्नानां मुद्रापणमावश्यकमित्यत्र च नास्ति सन्देहलेशोऽपि सङ्ख्यावत्पदवीं समधिष्ठितानां केषाञ्चिदपि सङ्ख्यावताम् । अस्य किल रचयिता विश्वविख्यातबुद्धिवैभवो वोपदेवो भूदेवः । अयं च—

> विद्वद्धनेशशिष्येण भिषक्केशवसूनुना ।
> तेने (१)वेदपदस्थेन वोपदेवद्विजेन यः ॥

इति तत्प्रणीतस्य कविकल्पद्रुमस्यान्तिमपद्येन, वोपदेवशतकाभिधेयतत्प्रणीतग्रन्थस्थेन—

> देशानां वरदातटं वरमतःसार्थाभिधानं महा
> स्थानं वेदपदास्पदाग्रजगणाग्रयं सहस्रं द्विजाः ।
> तत्रासीषु धनेशकेशवविदौ वैद्यौ वरिष्ठौ क्रमा
> चक्रे शिष्यसुतस्तयोः कृतिमिमां श्रीवोपदेवः कविः ॥

---

(१) वेदानां पदे व्यवसाये तिष्ठतीति वेदपदस्थः, तेनेति कविकल्पद्रुमटीकायां दुर्गादासविद्यावागीशाः ।

इति उपान्त्यपद्येन च चिकित्सककोविदाग्रगण्यस्य केवशस्य सुतो भिषक्शिरोमणेर्धनेशस्य शिष्यः, वरदानदीतटस्थसार्थाभिधानस्थानलब्धजन्मा द्विजन्मा चेति प्रमीयते । यद्यपि द्विजपदस्याद्यवर्णत्रये योगरूढतया नास्य निर्दिष्टप्रमाणमात्रादेकान्ततो विप्रत्वं प्रमातुं शक्यते तथापि वक्ष्यमाणे "यस्य व्याकरणे" इति श्लोके भूगीर्वाणशिरोमणीतिपदोपादानात्, मुग्धबोधव्याकरणव्याख्यान्तोपन्यस्ते—

विद्वद्धनेश्वरच्छात्रो भिषक्केशवनन्दनः ।
वोपदेवश्चकारेदं विप्रो वेदपदास्पदम् ॥

इति पद्ये विप्रपदोपन्यासाच्च नास्ति तस्य विप्रतायां विविधविप्रतिपत्तिसमुन्मेषशङ्का । आकर्ण्यते च कर्णोपकर्णिकया कैशोरावस्थायां वर्तमानोऽसौ वोपदेवः कविवरः सततं पर्यध्ययनः पित्रोपाध्यायेन च क्रियमाणे भर्त्सनताड़ने असहमानो गृहात्पलाय्य गच्छन् बहिर्ग्रामं कस्मिंचिदुद्देशे जलार्थं कूपात्कुम्भमाकर्षन्तीं कांचन वर्षीयसीं वनितामपश्यत् । अवालोकयच्च तस्य कूपस्य परिसरे प्रत्यहं रज्जुघट्टनघट्टितान् पाषाणभागान् । व्यचारयच्च नैरन्तर्यया प्रवृत्या नास्ति जगति किमपि जनिमतामसाध्यं नाम, एषु खलु प्रस्तरेषु रज्जुरिवाऽहमपि यदि तेषु तेषु शास्त्रेषु निरन्तरं प्रवर्तेयं तदाऽऽरुहेयमचिरादेव कालात्कृतीनां पदवीमिति चिन्तयन् तत एव परावृत्य स्वसद्म समासाद्य प्रत्यहं प्रतिक्षणं च कृतपरिश्रमोऽलभतासाधारणं वैदुष्यम् । यस्य प्रभावात् एते ग्रन्था आत्मानमासादितवन्त इति ।

ते च यथा—

१ हरिलीलामृतम्,—हरिलीलाविवरणम्, भागवतस्यानुक्रमणिका वा ।
२ मुक्ताफलम् ।
३ मुकुटनामको भागवतसारः, भागवतादर्शो वा ।
४ मुग्धबोधव्याकरणम् ।
५ कविकल्पद्रुमनामा धातुपाठः ।

६ तस्य काव्यकामधेनुनाम्नी धातुवृत्तिः ।

७ वोपदेववैद्यशतकम् , शतश्लोकी वा, इति ।

एत इवान्येऽपि प्रबन्धाः, तत्प्रणीता वर्तन्ते इति,

यस्य व्याकरणे वरेण्यघटनास्फीताः प्रबन्धा दश
प्रख्याता नव वैद्यकेऽथ तिथिनिर्धारार्थमेकोऽद्भुतः ।
साहित्ये त्रय एव भागवतत-त्त्वोक्तौ त्रयस्तस्य च
भूगीर्वाणशिरोमणेरिह गुणाः के के न लोकोत्तराः ॥

इति मधुसूदनकृतश्लोकार्थपर्यालोचनया सुस्पष्टमवगम्यते परन्तु अस्माकं दुर्भाग्यवशत एतत्कालपर्यन्तं ते न दृग्गोचतां समायाताः । अस्य वैदुष्यमिव भगवदेकतानतापि आसीदिति भगवच्चरित्रवर्णनपरभागवतादर्शप्रभृतिग्रन्थतोऽवसीयते ।

अस्य वर्तमानकालपर्यालोचने च—

विदुषा वोपदेवेन मन्त्रिहेमाद्रितुष्टये ।

इति हरिलीलामृतस्थाद्यपद्यद्वितीयचरणेन,

हरिलीलाविवेकोऽयं कामराजस्य वेश्मनि ।
कटके रचयाञ्चक्रे तुष्ट्यै हेमाद्रिणा सताम् ॥

इति मधुसूदनसरस्वतीकृततदीयव्याख्यान्तिमस्थचतुर्थश्लोकेन च हेमाद्रेः समकालीनत्वं प्रतीयते । हेमाद्रिश्च "देवगिरिस्थयादववंशीयश्रीमन्महादेवभूपतेः प्राड्विपाकापरपर्यायधर्माधिकरणपण्डितः, वोपदेवश्च तस्यैव सभापण्डित आसीत् परन्तु देवगिरिः कोदेशः, महादेवभूपतिः कः, कदा समुत्पन्न इत्यादिनिर्णयेऽन्वेषितेऽपि संप्रति नोपलब्ध" इति (१९५९) ऊनषष्ट्यधिकोनविंशतिशतविक्रमशके प्रभाकरीकम्पन्यधिपतिभिर्वाराणस्यां मेडिकल् हाल् नाम्नि यन्त्रालये मुद्रितस्य चतुर्वर्गचिन्तामणेर्दानखण्डस्य भूमिकायां सदाशिवदीक्षिता व्याहरन्ति स्म ।

श्रीमन्तो जाह्नवीचरण बी०एल्०बी०महाशयाश्च स्वकृतवङ्गभाषात्मकसंस्कृतसाहित्येतिहासग्रन्थे वोपदेवसमयं निर्णिनीषन्तः, "विद्वद्धने-

शशिष्येण भिषक्केशवसूनुना"। इति मुक्ताफलग्रन्थस्थवाक्यमुदाहरन्तः, तस्य धनेशशिष्यत्वं केशवसूनुत्वं च प्रमापयन्तो हेमाद्रिश्च तस्य पृष्ठपोषक आसीत् देवगिरौ यादववंशीयमहादेवनृपस्य षष्ट्यधिकद्वादशशतवत्सरतो द्वासप्तत्यधिकद्वादशशतकान्ते (१२-६०-१२७२) शासनकाले वोपदेव आसीदित्युट्टङ्कयन्तः समयनिर्णायकप्रमाणोपन्यासे चोदासीना एवेति मन्ये तेऽपि चतुर्वर्गचिन्तामणिभूमिकालेखमेव शरणीकृत्य व्याचक्रुरिति ।

अस्माभिरपि अन्विष्टेष्वपि प्रमाणेषु मुम्बय्यां विंशत्यधिकाष्टादशशतशालिवाहनशके गोपालनारायणकम्पन्याख्यजनतायन्त्रालये द्वितीयवारं मुद्रितस्य श्रीमद्भागवतस्य भूमिकायामुद्धवाचार्यस्य प्राकृतज्ञानेश्वरकृतगीताटीकापद्यात् हेमाद्रेः १२७२ शकःसंपद्यत इति एकादशाधिकाष्टादशशतशालिवाहनशकीयलेखातिरेकेण नान्यत्प्रमाणमुपलब्धम् । तथापि उपरि निर्दिष्टहरिलीलाविवेकोऽयमितिपद्यपर्यालोचनेन महादेवनृपस्य वा तद्वंशीयस्य रामदेवस्य वा अन्यस्यैव वा कस्यापि सर्वथा कामराजनाम्नः शासनकाले हेमाद्रिर्वोपदेवश्चास्तामिति वोपदेवोऽपि तस्मिन्नेव द्वादशशतकशकवत्सर आसीदिति वक्तुं प्रभवाम इत्यलमनतिप्रयोजनकेन ग्रन्थप्रणेतृमातृपितृजातिजन्मनामग्राम देशदिष्टव्यवसायाध्यवसाय एव कृतानल्पप्रयत्नानां शास्त्रोपदिष्टपदार्थ तत्वप्रतिपत्तिपरिशीलनोदासीनानां ग्रन्थभूमिकामात्रदर्शनेनैव च कृत कृत्यं मन्यमानानां पल्लवग्राहिपाण्डित्यानामाधुनिकपण्डितानां बी० ए०, एम्० ए० प्रभृतिमहाशयानामभिनवप्रणाल्यनुसरणेनेति ।

अल्पीयस्यपि अस्मिन्निबन्धेऽष्टादशसहस्रसङ्ख्यकश्रीमद्भागवताभिहिताखिलप्रतिपाद्यप्रसूनप्रचयानां स्वल्पैरेव श्लोकैः संग्रथिततयाऽनतिप्रौढमतीनां दुर्बोधतां, प्रौढानामपि परिश्रमातिशयसाध्यसुबोधतां कलयन्निरद्वैतसिद्ध्यादिमहानिबन्धप्रणेतृभिर्मधुसूदनसरस्वतीभिः प्रणीता हरिलीलाटीकाख्या व्याख्यापि सर्वेषां सुबोधायात्र सन्निवेशिता । मधुसूदनसरस्वत्यश्च—

नवद्वीपे समायाते मधुसूदनवाक्यतो ।
चकम्पे तर्कवागीशः कातरोऽभूद् गदाधरः ॥

इति पद्याद् गदाधरभट्टाचार्यसमकालीना इति नास्त्यत्र केषामपि विप्रतिपत्तिसमुत्पत्तिः ।

गदाधरभट्टाचार्याणां समयश्च सप्तदशशताब्दीमध्यभागः, तत्पूर्वकालो वेति कलिकातासंस्कृतसाहित्यपरिषत्प्रकाशितमुक्तिवादभूमिकायां श्रीमतां कालीपदतर्काचार्यमहाशयानां लेखादवसीयते ।

एतन्मुद्रणे चादर्शपुस्तकं शुद्धप्रायं नेपालाभिजनकार्ज्यालोपनामकपण्डितप्रवरपद्मनाभकेशरिमहोदयानामनुग्रहाल्लब्धमेकमेव । ईदृक्ग्रन्थरत्नवितरणेन लोकानुपकुर्वन्तस्तेऽपि न विस्मर्तुमर्हाः प्रेक्षावद्भिः ।

श्रीमद्भागवतस्य मधुसूदनसरस्वतीप्रणीता परमहंसप्रियाभिधेया व्याख्यापि यथोपलब्धमत्र सन्न्यवेशि ।

अस्य ग्रन्थस्य संशोधनादिकार्यमस्माकं शास्त्रप्रवेशोपयुक्तप्राथमिकसंस्काराऽऽधायकैर्नेपालस्थराजकीयसंस्कृतप्रधानविद्यालयाध्यापकैः श्रीमद्भिः पराजुल्युपनामकैः साहित्योपाध्यायैर्देवीदत्तोपाध्यायैर्महता परिश्रमेणाकारि । समार्पिते संशोधनादिकार्यनिवहे कलिकाताशिवकुमारभवनाध्यापकैः श्रीमद्भिर्भण्डार्युपनामकैः साहित्योपाध्यायैर्विष्णुप्रसादोपाध्यायैराज्ञप्तेन जयकृष्णादासगुप्तमहोदयप्रार्थितेन च मया यथोपलब्धप्रमाणोपन्यासपुरःसरमियं भूमिका शुद्धाशुद्धपाठविवेकपत्रं च यथामति व्यलेखि । अत्र मतिमान्द्यात्, दृष्टिदोषात् आयसाक्षरनियोजकदोषाद्वा जातानामशुद्धीनां संशोध्याध्ययनेन, अतिदुर्लभानि प्राचीनग्रन्थरत्नानि प्रकाशयितुं बद्धपरिकरेभ्यः संस्कृतविद्योन्नतये व्ययीकृतसर्वस्वेभ्यो जयकृष्णादासश्रेष्ठिमहोदयेभ्यो धन्यवादचिरजीवित्वादिप्रभूताशीर्वादवितरणेन च सफलयन्तु सुधियो निबन्धकसंशोधकप्रकाशकानामनल्पं परिश्रममिति निवेदयते—

पद्मप्रसादः ।

# सटीकहरिलीलामृतस्य शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| धारणा | धारणा । | ९ | १ |
| धर्मंग्लानि | धर्मंग्लानि । | ३१ | १ |
| र्भवति | र्भवति । | ३१ | २ |
| स्वीकारा | स्वीकार । | ,, | ४ |
| सम्लपवं | सम्प्लवं । | ,, | १५ |
| सम्भेग | सम्भोग । | ३४ | २१ |
| चकुः | चक्रुः | ३८ | २० |
| नवाङ्गीघ्रभिः | नवाङ्घ्रिभिः । | ३९ | ९ |
| धाम्रययान्तेषु | धाप्रत्ययान्तेषु । | ४१ | १२ |
| वत्थौ | वन्त्यौ । | ४१ | १५ |
| गुणरैग्निः | गुणैरग्निः । | ४८ | १ |
| निःसङ्गतत्यादि | निःसङ्गतेत्यादि । | ५० | २६ |
| कार्त्स्येन | कार्त्स्न्येन । | ५१ | ६ |
| ब्रह्मण्यधिष्ठनो | ब्रह्मण्यधिष्ठाने । | ५२ | २३ |
| अध्यायाथार्नाह | अध्यायार्थानाह । | ५३ | ११ |
| सहृदया | सहृदया । | ५४ | ५ |
| सवसङ्ख्या | सर्वसङ्ख्यां । | ,, | १९ |
| गरूपार्दिष्ट | गुरूपदिष्ट । | ५५ | ३ |
| रमणा | रमणी । | ५६ | २९ |
| व्यापोहतु | व्यपोहतु । | ५७ | १८ |

# परमहंसप्रियाशुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| श्रीकष्णं | श्रीकृष्णं । | ५८ | ६ |
| गसादतः | प्रसादतः । | ,, | ,, |
| शप्नो | स्वप्नो । | ६६ | १५ |
| समन्वायात् | समन्वयात् । | ६८ | ३ |

इति ।



श्रीगणेशाय नमः ॥

# हरिलीलामृतम् ।

नमः कृष्णाय नित्यैकसच्चिदानन्दरूपिणे ।
जगत्सर्गविसर्गादिसाक्षिणेऽचिन्त्यशक्तये ॥ १ ॥

जयन्ति वोपदेवस्य वाचो विद्वत्सु संस्तुताः ।
घनसारोज्ज्वलाभासाः क्षीरोदस्येव वीचयः ॥ २ ॥

श्रीमद्भागवतस्यानुक्रमणी तद्विनिर्मिता ।
हरिलीलाभिधानेयं यथाबुद्धि विविच्यते ॥ ३ ॥

इह कश्चिद् गुरुप्रसादाधिगतसमस्तशास्त्रार्थतत्त्वो द्विजाग्रणीर्वोपदेवनामा श्रीभागवतार्थं विवरिषुः प्रतिजानीते—

**श्रीमद्भागवतस्कन्धाध्यायार्थादि निरूप्यते ।**
**विदुषा वोपदेवेन मन्त्रिहेमाद्रितुष्टये ॥ १ ॥**

**श्रीमद्भागवतेत्यादि** । भागवतं च स्कन्धाश्चाध्यायाश्च तेषामर्थः । भागवताद्यर्थ आदिर्यस्य तत्तथा । आदिशब्दान्महाप्रकरणावान्तरप्रकरणार्थोपपत्तयः । **श्रीमदिति** हेतुगर्भं विशेषणम् । सुन्दरत्वान्निरूप्यत इत्यर्थः । क्रियाविशेषणं वा । अन्यार्थस्याप्यस्य पूर्णकुम्भन्यायेन मङ्गलार्थत्वम् । "मङ्गलादीनि शास्त्राणि प्रथन्ते सिद्धार्थाध्येतृकाणि च स्युः" इति **महाभाष्यम्** । यद्यपि भूयसा तदभ्यर्थनेन **हेमाद्रितुष्टय** इत्युक्तम् । तथापि योग्यतोषोपलक्षणपरं ज्ञेयम् । मन्त्री च राज्ञो देवगिरीश्वरस्य रामचन्द्रस्य इष्टदेवताप्रणामस्तु कृत इति ग्रन्थसमाप्तिप्रचयगमनाभ्यामवगम्यते । अन्यथा विघ्नोपघातावौ न स्तः ॥ १ ॥

तत्र भागवतार्थमाह—

**आनन्दस्य हरेर्लीलां वक्ता भागवतागमः ।**
**स्कन्धैर्द्वादशभिः शाखाः प्रतन्वन् द्विजसेविताः ॥ २ ॥**

**आनन्दस्येति** । **आनन्दस्या**नन्दरूपस्य । अनेन लीलाया उपादेयत्वमुक्तम् । आनन्दस्य लीलाप्यानन्दरूपेत्यर्थः । सामानाधिकरण्यं धर्मधर्मिभावनिरासार्थम् । इत्थमेव भगवद्रूपं "विज्ञानमानन्दं ब्रह्म" इति श्रुतेः । **लीला** वक्ष्यमाणरूपाः । भागवतमेव**आगमो** वेदः । "इतिहासः पुराणं च पञ्चमो वेद उच्यते" इत्युक्तेः । तथा भागवतमेव अगमो वृक्षः । तदा **वक्तेति** तिरस्कृतात्यन्तवाच्यध्वनित्वात्प्रकाशयितेत्यर्थः । यथा "उपदिशति कामिनीनां यौवनमद एव ललितानि"इत्यत्र उपदिशतीतिवत् । तेन भागवतद्रुमे हरिलीला प्रतीयते इत्यर्थः । वेदद्रुमाभ्यामस्य साम्यमाह—**स्कन्धैः** स्वावयवैः **शाखाः** कठाद्याः लताश्च **प्रतन्वन्** विस्तारयन् । **द्विजास्त्रै**वर्णिकाः पाक्षिणश्च । तृना च ताच्छील्यपरेण शास्त्रस्य लीलैकप्रतिपादनशीलत्वादन्यस्य भक्तिज्ञानादेरिहान्तःपात इत्युक्तम् । तेन लीलैव प्रतिपाद्या नान्यत् । एवमेवैतत् यो हि मन्यते भगवत्कथामात्रं प्रतिपाद्यं नान्यदिति । तेन "अत्र सर्ग" इत्यादे र्निर्विषयत्वं, प्रतीयमानसर्गाद्यपह्नवः, कर्तुर्महर्षेश्चाकौशलमिति त्रयमभ्युपेतं स्यात् । तस्मात्सुष्ठूक्तं **लीलां वक्तेति** ॥ २ ॥

नन्वत्र किं प्रमाणं किञ्चास्य लक्षणमिति तत्राह—

**सा च द्वितीयदशमे दशधा दर्शिता यथा ।**
**अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः ॥ ३ ॥**

**सा चेति, सा** लीला द्वितीयस्कन्धस्य दशमाध्यायेऽ**दर्शि** दर्शिता, तत्प्रमाणं, सर्गादिदशरूपत्वं लक्षणमित्यर्थः । तदेवाह—**अत्र सर्ग** इत्यादि । एषां लक्षणं वक्ष्यति—एकैकत्राव्याप्तेर्दशानामुक्तिः । एते च यथोत्तरमङ्गाङ्गित्वादाश्रयशेषाः । उक्तश्च परमहंसप्रियायामङ्गाङ्गिभावः । तत्राशरीरस्य विष्णोः पुरुषशरीरस्वीकारः **सर्गः** । पुरुषाद् ब्रह्मादीनामुत्पत्ति**र्विसर्गः** । तेषामाधारस्य लोकपञ्चस्य व्यवस्थानं **स्थानम्** । स्थितानामभिवृद्धिः **पोषणम्** । पुष्टानामाचार ऊतिः ॥ ३ ॥

**मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः ।**

सर्गादयस्तृतीयादिस्कन्धेषूक्ता दश क्रमात् ॥ ४ ॥

तत्रापि सदाचारो **मन्वन्तरम्**। तत्रापि विष्णुभक्तिरीशानुकथा। विष्णुभक्तानां प्रपञ्चाभावो **निरोधः**। निष्प्रपञ्चानां स्वरूपलाभो **मुक्तिः**। मुक्तानां ब्रह्मस्वरूपेणावस्थानम**आश्रय** इति लीलात्वं चैषामप्रयासेन क्रियमाणत्वात्। तत्र तत्र संशब्दनाच्च। नन्वनायासचेष्टितं लीला, आश्रयस्य च वक्ष्यमाणभङ्ग्या ब्रह्मत्वात् कथं लीलात्वम्। तथात्वे च लीलातद्वतोरभेदप्रसङ्ग इति चेत् न, चिन्मात्रवस्तुनो रज्जुसर्पन्यायेन यत्प्रपञ्चाधिष्ठानत्वं तस्यैव लीलात्वेन विवक्षितत्वात्। एवं कल्पितबन्धनिवृत्तेर्मुक्तावपि ॥ ४ ॥

एवं ग्रन्थार्थमुक्त्वा स्कन्धार्थमाह —

श्रोतुर्वक्तुश्च लक्ष्माऽऽद्ये, द्वितीये श्रवणे विधिः।
इतीदं द्वादशस्कन्धं पुराणं दशलक्षणम् ॥ ५ ॥

**सर्गादय** इति। क्रमश्च तृतीये सर्गश्चतुर्थे विसर्ग इत्यादि। **लक्ष्म** लक्षणम्। **विधि**रित्थं श्रोतव्यमिति। न च सर्गादीनां तृतीयादिनियतत्वेन प्रथमद्वितीययोरभावाल्लीलापरत्वोक्तिरव्यापिकेति वाच्यम्। "जगृहे पौरुषं रूपम्" इत्यादिना तत्रापि सूचितत्वात्। उपसंहरति—**इति**। अतो हेतोः अभिधेयानां द्वादशत्वाद् द्वादशैव स्कन्धा इति भावः। न च मुक्तेर्निरोधभेदस्य वक्ष्यमाणत्वान्नवलक्षणमिति युक्तम्। तदेकत्वेऽपि उपादेयतमत्वेन प्राधान्यात्पृथगुक्तेः ॥ ५ ॥

एवं स्कन्धार्थं विभज्य प्रथमार्थं विवृण्वन्निह प्रकरणान्याह—

प्रथमेऽष्टादशाध्यायास्तत्र प्रकरणत्रयम्।
त्रित्रिद्वादशभिर्लक्ष्यहीनमध्योत्तमत्वतः ॥ ६ ॥

**प्रथम** इति। तत्र प्रथमे त्र्यादिभिरध्यायैरिति शेषः। क्रमाच्च सम्बन्धः। "नौवयोधर्मविषमूलमूल" (अ४ पा४ सू९१) इति च द्विरूपशब्दसमभिहारात् त्रित्रि इत्यत्र नैकशेषः। एवमन्यत्र। कुतः प्रकरणत्रयमेक तत्राह—**लक्ष्येति**। **लक्ष्यस्य**=श्रोतृवक्तृरूपस्य हीनमध्योत्तमत्वेन

त्रैविध्यादित्यर्थः । **मध्यं** मध्यमम् । तच्च हीनवदनादेयतां वक्तुं त्रिभिरेवाध्यायैः कृतम् ॥ ६ ॥

तत्त्रैविध्यमेवाह—

**श्रोतारः शौनको व्यासः परीक्षिच्चोत्तमाः क्रमात् ।**
**वक्तारोऽपि तथा सूतो नारदः शुक इत्यमी ॥ ७ ॥**

**श्रोतार** इत्यादि । तथाशब्दात्क्रमात् हीनमध्यमोत्तमाः ॥ ७ ॥

ननु राज्ञो ब्रह्मर्षिभ्यामप्युत्कर्षः शुकस्य च देवर्षेः सकाशादिति कथमुक्तं तत्राह—

**वैराग्यस्य प्रकर्षेण प्रकर्षोऽत्र विवक्षितः ।**
**तल्लक्षणपरः श्रोतुं वक्तुं चार्हति संहिताम् ॥ ८ ॥**

**वैराग्यस्येति । अत्रैष** श्रोतृषु वक्तृषु च त्रिषु वैराग्यप्रकर्षात्**प्रकर्षो**ऽभिमतः । न ब्रह्मर्षित्वादिनेत्यर्थः । स्पष्टश्च शुकस्य तत्प्रकर्षः । राज्ञस्तु वक्ष्यति । ननु किमेतत्कथनेन तत्राह—**तल्लक्षणपर** इति । **ते**=हीनमध्योत्तमवैराग्या **लक्षणं** यस्य श्रोतुर्वक्तुश्च स तथा तत्तुल्य इत्यर्थः । **पर** इदानीन्तनः, **संहितां**=भागवतीम् । सर्वथा त्वेतत् वीतरागेण श्रुतमुक्तं वा न फले पर्यवस्यतीत्यर्थः ॥ ८ ॥

ननु प्रथमे वक्तृश्रोतृनिर्णय इति न कचिद् ग्रन्थकृतोक्तं, तत्कुतो ज्ञातमिति तत्राह—

**पुराणेष्वितिहासैर्हि लक्षणादिनिरूपणम् ॥**
**वेदः पुराणं काव्यं च प्रभुर्मित्रं प्रियेव च ।**
**बोधयन्तीति हि प्राहुस्त्रिवद्भागवतं पुनः ॥ ९ ॥**

**पुराणेष्विति,** हि शब्दो हेतौ । **लक्षणं** सर्गविसर्गादि । आदिशब्दाद्धर्माधर्मौ । अयमर्थः लोके यथेदं कुर्विदं मा कार्षीरिति साक्षाद्वाचोयुक्तयः, नचैवं पुराणेषु । तत्र हि पूर्ववृत्तकथनभङ्ग्या प्रवृत्त्याद्युच्यते न साक्षात् । तथा ह्युपदिश्यमानं विश्वास्यं चमत्कार्यं च स्यादिति भावः, तथैवं वृद्धानुमत्या द्रढयति वेद इति । इह हि अधिकारिभेदादुपदेशकं

त्रिधा । वेदः पुराणं काव्यं चेति । आद्ये शब्दस्य प्राधान्यं, द्वितीये त्वर्थस्य । तृतीये रसस्यैव । एषु च क्रमादुत्तमादयोऽधिक्रियन्ते । तत्र वेदः प्रभुवत्पुरुषं बोधयति, यथा हि प्रभुवाक्येष्विष्टसाधनतामनालोच्यैव भृत्याः प्रवर्त्तन्ते । एवमग्निहोत्रादिष्ववश्यकर्त्तव्यत्वात्पुरुषाः । पुराणं मित्रवत् । यथा मित्राणि मित्रं प्रभुवन्न नियुञ्जन्ते, किन्तु युक्त्या बोधयन्ति । तथाऽमुष्मात्कर्मणः फलममुकस्येदमासीदित्युपदेशः पुराणेषु । काव्यं प्रियावत् । यथा प्रिया ललितचेष्टाभिः पुरुषमाकृष्य विषये नियुङ्क्ते स चावश्यं तद्विधत्ते, तथा काव्यं विभावादिसम्पदा पुरुषं सरसीकृत्य रामादिवद्वर्त्तितव्यं न रावणादिवदित्युपदिशति । ननु पुराणमात्रे प्रकृतोपयुक्ते किममन्ययोः कथनेन तत्राह—**त्रिवदिति** । भागवतं पुनस्त्रिवत्=त्रिभिर्वेदादिभिस्तुल्यं क्वचित्कस्य चिद्व्यक्तिरिहेत्यर्थः ॥ ९ ॥

एवं प्रकरणार्थमुक्त्वा क्रमात्पादैरध्यायार्थमाह—

**पञ्च प्रश्नाः शौनकस्य सूतस्यात्रोत्तरं त्रिषु ॥ १० ॥**

**पञ्चेत्यादि** । शौनकस्य पञ्च प्रश्नाः प्रथमेऽध्याये इति शेषः । विवृताश्च ते **परमहंसप्रियायाम्** । तथापि प्रथमेऽध्याये सूतं प्रति शौनकादिप्रश्नः । स पञ्चधा । सर्वशास्त्रार्थसारोद्धारप्रश्नभङ्ग्या **नैमिषे** इत्यादिना विष्णूपासनाप्रश्नः । तस्य साकारनिराकारभेदैर्भेदे 'सूत जानासि' इत्यादिना साकारोपासनाप्रश्नः । तस्य श्रवणादिभेदाच्छ्रवणादिसिद्धये 'तस्य कर्माणि' इत्यादिना विष्णुलीलाप्रश्नः । ततोऽन्तरङ्गत्वात् 'अथाख्याहि' इत्यादिनाऽवतारलीलाप्रश्नः । ततोऽप्यन्तरङ्गत्वात् 'कृतवान् यानि' इत्यादिना कृष्णावतारलीलाप्रश्नः । एषु चोत्तरोत्तरप्राधान्यं न तूत्तरेण पूर्वस्य बाधः । तदुक्तिवैयर्थ्यापत्तेः । एतावानेव भागवतप्रतिपाद्योऽर्थ इति **सूतस्येति** । अत्रैष पञ्चसु प्रश्नेषु मध्ये आद्येषु त्रिषु उत्तरं द्वितीयाध्यायार्थः । **त्रिष्विति** विषयसप्तम्या सम्बन्धलाभः त्रयाणामित्यर्थः । तच्चोत्तरं क्रमात् । 'सवैपुंसां' 'सत्त्वं रजस्तम' इति । 'स एवेदम्' इत्यादिभिः ॥ १० ॥

अवतारप्रश्नयोश्च व्यासस्यानिर्वृतिः क्रमात् ।
नारदस्यात्र हेतूक्तिः प्रतीत्यर्थं स्वजन्म च ॥ ११ ॥

**अवतारेति** । चकारादुत्तरम् । अवतारप्रश्नश्चावतारप्रश्नश्चेत्येकशेषयोर्यद्यपि सामान्येनोक्तं तथाप्यवतारलीलाप्रश्नः कृष्णावतारलीलाप्रश्नश्चेति ज्ञेयम् । उत्तरं तु 'जगृहे पौरुषं रूपं' । 'एते चांशकलाः पुंस' इत्याभ्याम् । हीनं लक्ष्यमुक्त्वा मध्यममाह—**व्यासस्येति** । **अनिर्वृतिः**रतुष्टिः कृताद्भारतादेः । **अत्र**=अनिर्वृतौ । **स्वजन्म**=नारदत्वप्राप्तिः ॥ ११ ॥

**उत्तममाह—**

सुप्तघ्नद्रौणिरभिभवस्तदस्त्रात्पाण्डवावनम् ।
भीष्मस्य स्वपदप्राप्तिः कृष्णस्य द्वारकागमः ॥ १२ ॥

**सुप्तघ्नेति** । सुप्तान् पाञ्चालान् हन्तीति तथा सुप्तघ्नत्वादभिभूतः । **द्रौणिरिति** द्रोणपुत्रत्वादवध्य इत्युक्तम् । 'परीक्षितोऽथ राजर्षे'-रित्यतः प्राक् पूर्वाध्यायशेषः । तस्य द्रौणेरस्त्राद् **वनं** रक्षा । कुन्तीस्तुतिस्तु पाण्डवरणप्रसङ्गात् । 'व्यासाद्यै'रित्यादिरूपोद्घातो नवमस्य । यस्माद् भ्रष्टः संसारे पतितस्तत्**स्वपदं** । कृष्णस्येति स्पष्टम् ॥ १२ ॥

श्रोतुः परीक्षितो जन्म धृतराष्ट्रस्य निर्गमः ।
कृष्णमर्त्यत्यागसूचा ततः पार्थमहापथः ॥ १३ ॥

**श्रोतुरित्यादि** । **श्रोतुरिति** हेतुगर्भं विशेषणम् । **धृतराष्ट्रस्येति** हिमवन्तं प्रतीति शेषः । **मर्त्यं**=शरीरं लोको वा । **सूचेति** विषण्णार्जुनदर्शनाद्राज्ञः स्फूर्त्या न त्वर्जुनस्योक्त्या । **पार्थाः**=पाण्डवाः **महापथो** देहपातार्थम् उदग्गमनम् ॥ १४ ॥

भूधर्मयोः कलेर्भीतिस्तत्त्राणं परीक्षिता ।
परीक्षितो ब्रह्मशापः प्रायेण शुकसङ्गमः ॥ १४ ॥

**भूधर्मयोरिति** स्पष्टम् । ततः कलेस्**त्राणं** रक्षा । भूधर्मयोरित्येव । **परीक्षित** इति स्पष्टम् । संन्यासपूर्वकमनशनं **प्रायः** । **अस्य**=परीक्षितः ॥ १४ ॥

इत्यष्टादशभिः पादैरध्यायार्थाः क्रमात्स्मृताः।
स्वपरप्रतिबन्धोनं स्फीतं राज्यं जहौ नृपः॥ १५॥
इति वैराग्यदार्ढ्योक्त्यै प्रोक्ता द्रौणिजयादयः॥ १६॥

इति श्रीभागवते प्रथमस्कन्धः समाप्तः॥

---

**इत्यष्टादशभि**रिति स्पष्टम्। नन्विह द्वादशभिरध्यायैरुत्तमे लक्ष्येऽभिधेये किमित्यनङ्गानां द्रौणिजयादीनां सप्तानामुपन्यासस्तत्राह—**स्वपरेत्या**दिना। अयमर्थः। राज्यं स्तोकं बलवत्प्रतिबद्धं वा त्यजेत्। इदं तावत्स्फीतं न चात्र प्रतिबन्धः। स हि स्वैः परैर्वा स्यात्। तथाहि—स्वप्रतिबन्धाभावं वक्तुं धृतराष्ट्रभीष्मपार्थाद्यपगमोक्तिः। परप्रतिबन्धाभावार्थं तु भगवत्प्रयाणद्रौणिजयोक्तिः। तस्मात्स्वपरप्रतिबन्धहीनं स्फीतमपि राज्यं विष्णुपदप्रेप्सया जहाविति राज्ञो वैराग्यदार्ढ्यं वक्तुं द्रौणिजयादयोऽभिहिता इति नानङ्गत्वमेषाम्। न च द्रौणिः पार्थप्रयाणस्योर्ध्वं राज्यं किं न प्रतिबद्धवानिति वाच्यम्। अभिभवोर्ध्वं शस्त्रन्यासस्य प्रतिज्ञानात्। नापि ब्रह्मशापोद्वेगेन राज्ञा राज्यत्यागात्कुतो वैराग्यमिति शङ्क्यम्। शापात्प्रागेव हेयोपादेयनिश्चयेन वैराग्यसद्भावात्। यदुक्तम्—"अतो विहायेममसुं च लोकं विमर्शितो हेयतया पुरस्तात्" इत्यादि। शापे तु चिकीर्षितत्यागावसर एवोपस्थितत्वेन परितोषाच्च। अत एवेह तत्प्रतीकारानुद्योगः। यत्तु **भारते** प्रतीकारकथनं तद्भिन्नकल्पविषयत्वादविरुद्धम्। तस्माद्राज्ञो वैराग्यस्य प्रकर्षः सिद्धः।

इति श्रीभागवते श्रीमधुसूदनसरस्वतीकृतायां हरिलीलामृतटीकायां

**प्रथमः स्कन्धः।**

# द्वितीयः स्कन्धः ।

एवं प्रथमे वक्तृश्रोतृस्वरूपं निष्कृष्य सम्प्रति श्रवणे प्राप्ते अङ्गसहितेऽङ्गिनि अनुष्ठिते फलमावश्यकमिति श्रवणाङ्गार्थं द्वितीयः कृत इत्याह—

**द्वितीये श्रवणाङ्गानि ध्यानं श्रद्धा विमर्शनम् ॥**
**द्विद्विषड्भिर्दशाध्याये ध्यानं साधरणे हरेः ।**
**देहेऽसाधारणे जीवैः श्रद्धा श्रोतरि वक्तरि ॥ १ ॥**

**द्वितीय** इत्यादि । तत्र **श्रवणं** क्रमात्पदवाक्ययोः शक्तितात्पर्यज्ञानम् । **ध्यानं** तत्त्वचिन्ता । **श्रद्धा** चित्तप्रसादः सा प्यङ्गमेव । तत्पूर्वत्वात्तत्त्वप्रतिपत्तेः । "श्रद्धत्स्व सौम्य" इति श्रुतेश्च । **विमर्शनं** युक्त्या पर्यालोचनं मननमित्यर्थः । एतानि श्रवणस्याङ्गानि । नचाङ्गत्वात्पूर्वं ध्यानादीनि, ततः श्रवणं कार्यमिति शङ्क्यम् । स्वरूपोपकारिणामेवाङ्गानां पूर्वभावित्वात् । क्रताविव चरुपुरोडाशादीनाम् । फलोपकारिणां पुनरव भृथादीनामिवोत्तरभावित्वोपलम्भात् । फलोपकारीणि च ध्यानादीनि । यावद्धि तानि न निष्पद्यन्ते तावत्कृतमपि श्रवणमा(१)परोक्ष्येण पर्यवस्यतीत्यर्थः । इदमत्र तत्त्वम् । "श्रोतव्यो मन्तव्य" इत्यत्र शास्त्रेषु त्रयी गतिर्मनननिदिध्यासनाभ्यां फलोपकार्याभ्यां श्रवणं नामाङ्गी विधीयत **इत्येके** । श्रवणमननाभ्यां फलोपकार्यङ्गाभ्यां ध्यानं नामाङ्गि विधीयत **इत्यन्ये** । त्रयाणामपि षड्यागवत्समप्राधान्येन साक्षात्कारं प्रत्यङ्गत्वमि**त्यपरे** । युक्तयस्तु तत्रैवानुसन्धेयाः । तत्राद्यं पक्षमवष्टभ्येदमाचार्येणोक्तं **श्रवणाङ्गानीति** । अथ करणान्याह—**द्वीति** । द्व्यादिभिर्ध्यानादीनि क्रमादित्यर्थः । **द्वादशाध्याय** इति स्कन्धाविशेषणम् । अध्यायार्थानाह—**ध्यानमिति जीवैरित्यन्तम्** । ध्यानं द्वेधा जीवैः साधारणे हरेर्देहे एकम् । तैरसाधारणेऽपरम् । तत्र श्रोतव्यादिविषयराजप्रश्नोत्तरं

---

(१) अपारोक्ष्येणेति पाठान्तरम् ।

पुरस्कृत्य सर्वजीवसाधारणाकारविश्वमूर्त्तिविष्णुधारणा **प्रथमे**। निःसङ्गं पुरस्कृत्य सर्वजीवासाधारणचतुर्भुजादिविशिष्टाकारविष्णुधारणा फलपर्यन्ता **द्वितीये**। **श्रद्धेति** । श्रद्धा द्वेधा। श्रोतृवक्तृभेदात्। तत्र सर्वदेवेभ्यो हरेरुत्कर्षं पुरस्कृत्य श्रोतृश्रद्धा **तृतीये** । सा चायुर्हरतीत्यादिशौनकोक्तेर्गम्यते । राजप्रश्नं पुरस्कृत्य वक्तृश्रद्धा **चतुर्थे**। सा च शुकस्य "नमः परस्मा" इत्यादिनमस्काराद्गम्यते । वक्तृश्रद्धापि श्रवणाङ्गं, न ह्यश्रद्दधाने वक्तरि श्रोतारस्तत्त्वमवगच्छन्ति ॥ १ ॥

**उत्पत्तौ चोपपत्तौ च विमर्शस्तत्र देहयोः ।**
**उत्पत्तिस्त्रिविधाऽऽद्यस्य मूर्तामूर्तविभेदतः ॥ २ ॥**

**उत्पत्ताविति** । विमर्शो द्वेधा— उत्पत्त्युपपत्तिभेदात्। उत्पत्त्युपपत्ती च पूर्वोक्तयोः सम्बन्धिन्यौ। तत्रोत्पत्तिस्त्रिविधा—**आद्यस्य** देहस्य मूर्त्तामूर्त्तत्वभेदाद्द्वे । अन्त्यस्य त्वेकेति । तत्र **पञ्चमे** साधारणदेहस्य मूर्त्तस्योत्पत्तौ विमर्शः । **षष्ठे** तु तस्यैवामूर्त्तस्योत्पत्तौ, **सप्तमे** त्ववताराख्यस्यासाधारणस्योत्पत्तौ ॥ २ ॥

**उपपत्तिस्त्रिधाऽऽक्षेपसमाधानप्रयोजनैः ।**
**त्रयाणां दशभिर्भेदैरित्यध्याया दश क्रमात् ॥ ३ ॥**

**इति श्रीभागवते द्वितीयः स्कन्धः ॥**

---

उपपत्तिरपि त्रेधा, आक्षेपसमाधानप्रयोजनभेदात् । तत्रा**ष्टमे** देहोत्पत्तिं प्रति राज्ञः प्रश्नः । **नवमे** तु तस्याक्षेपस्य समाधानम् । **दशमे** च देहोत्पत्तिनिरूपणं प्रयोजनम् । उपसंहरति—**त्रयाणामिति** । त्रयाणां ध्यानश्रद्धाविमर्शानाम् । ध्यानस्य श्रद्धायाश्च द्वौ द्वौ भेदौ विमर्शस्य षडित्येवं दशभिर्भेदैर्दशैवाध्यायाः कृता इत्यर्थः ॥ ३ ॥

इति श्रीमधुसूदनसरस्वतीकृतायां हरिलीलामृतटीकायां
**द्वितीयः स्कन्धः ।**

---

# तृतीयः स्कन्धः ।

एवं द्वाभ्यामधिकारिणं सेतिकर्तव्यताकमुक्त्वा लीलायाः प्रथमं भेदं सर्गं वक्तुं तृतीय आरब्ध इत्याह—

**तृतीये तु त्रयस्त्रिंशदध्यायाः सर्गवर्णने ।**
**सर्गः कारणसम्भूतिर्भिन्ना सा योगसाङ्ख्ययोः ॥ १ ॥**

**तृतीये** त्विति । सर्गलक्षणमाह—**सर्ग** इति । कारणानां जगद्धेतूनां महदादितत्त्वानां जन्म सा **कारणसम्भूतिः** साङ्ख्येन योगमार्गेण च भिन्नेत्यर्थः ॥ १ ॥

अत एवात्र महाप्रकरणद्वयमित्याह—

**विदुरायोक्तवान् योगं मैत्रेयो, देवहूतये ।**
**कपिलः साङ्ख्यमित्येतावितिहासाविहोदितौ ॥ २ ॥**

**विदुराये**ति । **मैत्रेयो** विदुराय योगमार्गेण सर्गमुक्तवान् । **कपिल**स्तु देवहूतये सांख्यमार्गेण । इतिशब्दो हेतौ । **एतौ** योगेतिहासः साङ्ख्येतिहासश्च ॥ २ ॥

तयोरध्यायान् विभजति—

**ऊनविंशतिराद्योऽत्र चतुर्भिर्विदुरागमः ।**
**अष्टाभिः सर्गविस्तारः सप्तभिः क्रीडता हरेः ॥ ३ ॥**

**ऊनविंशति**रिति । एकोनविंशतिरध्याया आद्य इतिहासः । अत्रैवावान्तरप्रकरणान्याह—**अत्रे**त्यादि । **क्रीडता** वराहत्वम् ॥ ३ ॥

ननु सर्गे वक्तव्ये किं वराहेण तत्राह—

**सर्गाधारधरोद्धर्तुर्द्वितीयस्तु चतुर्दश ।**
**एकेन तत्र संक्षिप्तः सर्गस्तद्विस्तरोक्तये ॥ ४ ॥**
**चतुर्भिः कपिलोत्पत्तिर्नवभिः कापिलोक्तयः ।**

**सर्गे**ति । स हि सर्गस्याधारभूतां पृथ्वीमुद्धृतवानित्युक्तः । आधारस्थितिसव्यपेक्षं चाधेयम् । **द्वितीयः** साङ्ख्येतिहासः । तत्रावान्तरप्रकर-

णान्याह—**एकेनेति** । **तत्र** इतिहासे । तस्य संक्षिप्तस्य सर्गस्य विस्तरेणोक्तये वक्तुः कपिलस्योत्पत्तिश्चतुर्भिरुक्तेत्यर्थः । **नवभिः** अध्यायैः **कपिलस्योक्तयो** निरूपणानि ॥ ४ ॥

प्रकरणार्थमुक्त्वा क्रमात्पादैरध्यायार्थमाह —

**बन्धुभिः क्षत्तुरुद्वासस्तद्धतेः श्रुतिरुद्धवात्** ॥ ५ ॥

**बन्धुभिरि**त्यादिना । **बन्धुभिर्दु**र्योधनादिभिः । **क्षत्तुर्विदुर**स्योद्वा**सः** पुरान्निर्वासनम् । क्षेमप्रश्नादिकं तु तत्प्रसङ्गात् । **तद्धतेरिति** । तेषां बन्धूनां हतेर्वधस्य श्रुतिः श्रवणम् । उद्धवात्तत्सकाशात् । क्षत्तुरित्येव । एतच्च द्वितीये यद्यपि नोपलभ्यते । तथापि "सुयोधनं सानुचरं शयानं"इत्यन्तं द्वितीयाध्यायार्थं मत्वा दीर्घदृशाऽऽचार्येणैवमुक्तम् । एवमन्यत् । यद्वाऽयं तच्छब्दो यदुवाचिनं बन्धुशब्दं परामृशति । प्रकृतश्च पूर्वाध्याये यदुप्रश्नः । तद्वधश्रुतिस्तु "कृष्णद्युमणिनिम्लोच" इत्यनेन । श्रुतिरुद्धवादिति चोत्तरवाक्यद्वयेऽनुवर्त्तनीयम् ॥ ५ ॥

**कृष्णावतारावसतेर्मैत्रेयात्स्वाहितस्य च ।**

कृष्णावतारस्या**वसाति**रवसानं समाप्तिस्तस्याः श्रुतिरुद्धवादेव । इदमपि "सोऽहं तद्दर्शनाह्लादवियोगार्त्तियुत"इत्यन्तं तृतीयाध्यायार्थं मत्वोक्तम् । **मैत्रेयात्स्वाहितस्य च** श्रुतिरित्यनुवर्त्तते । तत्त्विह तन्त्रन्यायेनानुवर्त्तनीयम् । ततश्च मैत्रेयात्ते स्वाहितस्य श्रुतिर्भविष्यतीति उद्धवाच्छ्रुतिरभूदित्यर्थः । **स्वाहितं** तत्त्वज्ञानम् ॥

**सत्त्रयोर्विंशतेर्जन्म सद्भिर्व्यक्तिः परात्मनः** ॥ ६ ॥
**सम्यग्बुद्ध्वा पुनः प्रश्नः सद्व्यक्तात्पद्मजोद्भवः ।**
**पद्मजेन स्तुतिस्तस्य सर्गाः कालोक्तये दश** ॥ ७ ॥
**कालांशाः परमाण्वाद्या ब्रह्मपुत्रसमुद्भवः ।**
**आविर्भावो वराहस्य गर्भाधानञ्च दैत्ययोः** ॥ ८ ॥
**शापो मुनिभ्यो वैकुण्ठे विष्णूक्तेभ्यस्त्वनुग्रहः ।**
**हिरण्याक्षस्य सामर्थ्यं वराहेण च सङ्गरः** ॥ ९ ॥

वधश्च देवस्तोत्रेषु कारणोक्तिः समासतः ।
कर्दमेन हरेस्तोषो देवहूतेः करग्रहः ॥ १० ॥

**सदिति** । सतां महदादितत्त्वानां या त्रयोविंशतिस्तस्या जन्म विदुरं प्रत्युक्तं मैत्रेयेण । तानि च प्रकृतिपुरुषौ हित्वा "मूलप्रकृति"रितिश्लोकोक्तानि । **सद्भिस्तत्त्वैः परमात्मनो** विष्णोः**र्व्यक्तिः** स्वस्मिन् प्रकटीकरणम् । मैत्रेयोक्तं सम्यगवगम्य पुनर्विदुरस्य प्रश्नः, सत्सु व्यक्ताद्विष्णोः पुरुषनामसमापन्नाद्ब्रह्मणो जन्म । पद्मजशब्दोक्तिरादौ पद्मं समुद्भूतं ततो ब्रह्मेति क्रमविवक्षया । **तस्य** सद्व्यक्तस्य । सर्गाणां महद्दहङ्कारतन्मात्रेन्द्रियवैकारिकतामसस्थावरतिर्यगर्वाक्स्रोतोदेवभेदाद्दशत्वम् । ते च कालनिरूपणाय । **अंशाः** अवयवाः । आदिशब्दात्परममहत्त्रुटिलवादयः परार्द्धान्ताः । ब्रह्मणः पुत्राः सनकरुद्रादयस्तेषामुद्भवः । **दैत्यौ** हिरण्याक्षहिरण्यकशिपू तयोः । दैत्याधिकारे द्वयोः शापः विष्णूक्तेभ्यो मुनिभ्य इत्येव । **सङ्गरो**=युद्धम् **वधश्च** । **देवस्तोत्रे**ष्विति स्तुतेरुत्तराध्यायशेषत्वं मत्वोक्तम् । एवं योगेतिहासमुक्त्वा **साङ्ख्ये**तिहासमाह—**कारणोक्ति**रिति । कारणं महदादि । **समासतः** सङ्क्षेपतः। **कर्दमेने**ति स्पष्टम् ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

तयोर्विचित्रसम्भोगस्ताभ्यां कपिलजन्म च ।
लक्षणं भगवद्भक्तेः सचतुर्विंशतेस्तथा ॥ ११ ॥

**ताभ्यां** कर्दमदेवहूतिभ्याम् । **लक्षणं** भगवद्भक्तेः कपिलेन देवहूतिं प्रत्युक्तमिति शेषः । **सत्**=तत्त्वम् । तथाशब्दाल्लक्षणम् ॥ ११ ॥

असत्पुरुषयोश्चैव ज्ञानयोगस्य च क्रमः ।
भक्तियोगस्य कालारेः पापात् तामस्यधो गतिः ॥ १२ ॥

**असत्**=प्रकृतिः । चशब्दाल्लक्षणम् । येन क्रमेण योगः स्यात्स **ज्ञानयोगस्य क्रमः** । **भक्तियोगस्य** क्रम इत्येव । **कालारे**रिति "लक्षणं भगवद्भक्तेः"इत्यनेन सहापौनरुक्त्यार्थम् । पापात्तामसी गतिः, सा **चाधो** नरके ॥ १२ ॥

**राजस्यन्तः पुण्यपापात् सात्त्विक्यूर्ध्वं च पुण्यतः।**
**देवहूतिवदात्माप्तिरध्यायार्था इमेऽङ्घ्रिभिः ॥ १३ ॥**

इति श्रीभागवते तृतीयः स्कन्धः समाप्तः ॥

---

पुण्यपापाभ्यां **राजसी, सा चान्त**र्मध्ये मर्त्यलोके। केवलपुण्या-त्**सात्त्विकी** सा **चोर्ध्वं** स्वर्गे। तदुक्तं **साङ्ख्ये**—

धर्मेण गमनमूर्ध्वं गमनमधस्ताद्भवत्यधर्मेण। (सां० का० ४४)
ऊर्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः ॥
मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्यन्तः॥ इति। (सां०का० ५४)

अस्य द्विविधस्यापि सर्गस्य सम्यग्ज्ञानादात्मप्राप्तिर्देवहूतिवदन्येषा-मपि स्यादित्यर्थः। **अध्यायार्था इमेऽङ्घ्रिभिः**=पादैः ॥ १३ ॥

इति श्रीमधुसूदनसरस्वतीकृतायां हरिलीलामृतटीकायां
**तृतीयः स्कन्धः।**

---

## चतुर्थः स्कन्धः।

एवं सर्गमुक्त्वा तद्भेदो विसर्गश्चतुर्थ उच्यत इत्याह—

**एकोनत्रिंशताऽध्यायैर्विसर्गस्तुर्य ईरितः।**
**विसर्गः कार्यसम्भूतिः कार्यं बुद्‌ध्वा चतुर्विधम् ॥ १ ॥**
**स्त्रीबालप्रौढवृद्धत्वैश्चतुष्प्रकरणी कृता।**
**सतीध्रुवपृथुप्राचीनेतिहासैस्तदुक्तये ॥ २ ॥**

**एकोनत्रिंशतेति**। तल्लक्षणमाह—**विसर्गः कार्यसम्भूति**-रिति। सर्ग एव विविधकार्यरूपो **विसर्गः**। प्रकरणान्याह—**कार्यं बुद्ध्वेत्या**दिना। स्त्रीबालप्रौढवृद्धत्वभेदाच्चतुर्द्धा कार्यमिति ज्ञात्वा ऋषिणा चतुष्प्रकरणी कृतेत्यर्थः। ननु सत्स्वपि परःसहस्रेषु किमिदं चतुर्विध-मिति। यदि तावाल्लिङ्गमुपलक्षकं तदा सर्वकार्यव्याप्तिः स्यात्, लिङ्गस्य

सर्ववस्तुनिष्ठत्वात् । यदाह-**भर्तृहरिः**—

आविर्भावस्तिरोभावः स्थितिश्चेत्यनपायिनः ।
धर्मा मूर्त्तिषु सर्वासु लिङ्गत्वेनानुदर्शिताः ॥ इति ।

किञ्च वयोविशेषानुत्सृज्य पुंस्त्वमात्रं वाच्यं स्यात, क्लीबग्रहणं च कर्त्तव्यम्, लिङ्गानां त्रित्वादिष्टं चातुर्विध्यं च न सिद्ध्येत् । तेन न लिङ्गमुपलक्षणं, नापि वयः, स्त्रीग्रहणानर्थक्यप्रसङ्गात् । घटादिष्वव्याप्तेश्च । वयो हि प्राणिनां कालकृता शरीरावस्था, पौगण्डे चाव्याप्तिः । चतुष्टयहानिस्तूक्तैव । तस्मान्न वयः, नाप्युभयम् । उक्तसर्वदोषानुषङ्गात् । लिङ्गवयसोः प्रत्येकं त्रैविध्येन कार्यस्य षड्विधत्वप्रसङ्गाच्च । तदेतदत्यन्तसान्दिग्धमाचार्याणां "कार्यं बुद्ध्वा चतुर्विधम्" इति चेत , न । इह उच्चावचे कार्ये सत्यपि पुरुषार्थोपयोगिनश्चतुर्विधस्योपादानात् । तत्र मनुष्याधिकारं शास्त्रमिति मनुष्या एवोपात्तास्तत्रापि नाग्निहोत्रादिवद्भक्तौ नियतलिङ्गवयस्क एवाधिकारी किन्तु सर्वोऽप्यधिक्रियत इति वक्तुमृषिणा स्त्रीबालप्रौढ़वृद्धा दर्शिताः । षण्ढस्य तु भक्त्याधिकारित्वेऽपि तस्य शुक्रशोणितसाम्यरूपत्वेन स्त्रीपुंसयोरेवान्तर्भाव इति मत्वा न पृथग्ग्रहणम् । तथाच **शारीरे**— (वाग्भ०शा०स्था०)

अत एव हि शुक्रस्य बाहुल्याज्जायते पुमान् ।
रक्तस्य स्त्री तयोः साम्ये क्लीबः, शुक्रार्त्तवे पुनः ॥ (अ०१श्लो०५)

अत एव **महाभाष्ये**–संस्त्यानप्रसवो लिङ्गमित्युक्तम् । **संस्त्यानं** संहतिरपचयः, प्रसूतिरुपचय इत्यर्थः । पुंग्रहणं तु बालप्रौढ़वृद्धत्वैरित्यत्र सवयस्कानां पुंसामेवोपादानान्न कृतम् । अन्यथा स्त्री इति पृथक् न ब्रूयात् । पौगण्डस्तु प्रौढ़ान्तर्भूत इति न पृथगुपात्तः । तदुक्तम्–

गर्भस्थैः सदृशो ज्ञेयः आष्टमाद्वत्सराच्छिशुः ।
बाल आषोडशाद्वर्षात्पौगण्डश्चेति शब्दितः ॥ इति ।

तस्मात्सुष्ठूक्तं **कार्यं बुद्ध्वा चतुर्विध**मिति । तदेतद्बुद्ध्वेत्यस्य गर्भे द्रष्टव्यम् । उक्तं चातुर्विध्यं ग्रन्थे स्पष्टयति **सतीति** । सती स्त्री, ध्रुवो बालः, पृथुः प्रौढ़ः, **प्राचीनः** प्राचीनबर्हिः, स वृद्धः । भीमादिवदुत्तरपद-

लोपः। सत्यादीनामितिहासैस्तस्य चतुर्विधस्य कार्यस्योक्तये चतुष्प्रकरणी कृतेत्यन्वयः ॥ १ ॥ २ ॥

अस्यामध्यायान्विभजति—

**सप्तभिश्च चतुर्भिश्च दशभिश्चाष्टभिस्तथा।**
**मनुकन्यान्वयः सत्यै द्विषस्तत्पतितातयोः ॥ ३ ॥**

**सप्तभिरिति**। सतीतिहासः सप्तभिः। एवमन्यत्। अथ क्रमात्पादैरध्यायार्थानाह— **मन्विति**। **सत्यै** सतीप्रसङ्गार्थम्। तस्याः सत्याः पतिश्च तातश्च तौ। तयो रुद्रदक्षयोरित्यर्थः ॥ ३ ॥

**पत्या निषेधनं सत्या देहत्यागः पितुर्मखे।**
**गणैर्दक्षमखध्वंसो ब्रह्मणा रुद्रसान्त्वनम् ॥ ४ ॥**

दक्षगृहं मा गच्छेति **निषेधनम्**। देहत्यागः सत्या इत्येव। **गणाः** प्रमथास्तैः। **सान्त्वनं** क्रोधहरणम् ॥ ४ ॥

**विष्णुना यज्ञसंसिद्धिर्ध्रुवेणाऽऽराधनं हरेः।**
**कामलाभो ध्रुवस्याऽस्माद्यक्षान्ताद्वारणं मनोः ॥ ५ ॥**

**संसिद्धिः** समाप्तिरर्थाद्दक्षयज्ञस्य। स्त्रियमुक्त्वा बालमाह—**ध्रुवेणेति**। **कामलाभ** इष्टप्राप्तिः **अस्माद्धरेः**। **अन्तो** नाशस्तस्मात् **मनोः** स्वायंभुवः। कर्त्तरि षष्ठी। मनुकर्तृकं वारणमित्यर्थः। ध्रुवस्येत्येव ॥५॥

**विष्णोर्ध्रुवपदप्राप्तिः पृथवे वेनसम्भवः।**
**वेनबाहोः पृथूत्पत्तिः सूताद्यैः स्तवनं पृथोः ॥ ६ ॥**

विष्णुना दत्तं यद्ध्रुवमचलं पदं तत्प्राप्तिर्ध्रुवस्येत्यर्थः। प्रौढमाह—**पृथव** इति। **पृथवे** पृथोः प्रसङ्गार्थम्। **सूताद्यै**रित्यादिशब्दान्मागधबन्दिनौ॥ ६ ॥

**पृथुना निग्रहो भूमेस्तत्तद्दुग्धस्य दोहनम्।**
**जयोऽश्वमेधे शक्रस्य साक्षात्कारो मधुद्विषः ॥ ७ ॥**

**तस्य तस्यौ**षधिच्छन्दोबलरूपस्य दुग्धस्य। **जयः शक्रस्य** पृथुनेत्येव ॥ ७ ॥

**सभामध्ये स्वधर्मोक्तिः कुमारेभ्यः परात्मधीः ।**
**तया वने स्वधर्माप्तिस्तपः पित्रे प्रचेतसाम् ॥ ८ ॥**

**स्वधर्मो**=विष्णुसेवा । **कुमाराः** सनकाद्याः । **परात्मधीः** तत्त्वज्ञानम् । **तया**=परात्मधिया । पृथोरिति मण्डूकप्लुतिन्यायेन चतुर्षु वर्तते । **वृद्धकार्यमाह—तप** इति । **पित्रे** प्राचीनबर्हिषे । तत्प्रसङ्गार्थमित्यर्थः । रुद्रगीतमित्यन्तोऽध्यायार्थः ॥ ८ ॥

**ध्यात्मोक्तिर्नारदेनास्मै पापर्द्धिस्तां विनाऽऽत्मनः ।**
**कालाभिभूतिस्तच्छक्तेर्मुक्तिर्द्वन्द्वविपर्यये ॥ ९ ॥**

धीश्चात्मा च ध्यात्मानौ तयोरुक्तिर्बुद्ध्यात्मनोर्निरूपणमित्यर्थः । **अस्मै**=प्राचीनबर्हिषे । **तां**=धियं पुरञ्जनीरूपां **विना** तद्रहितस्यात्मनः पुरञ्जनरूपस्य **पापर्द्धिर्मृ**गया । समासगतमपि धीशब्दं बुद्ध्या विच्छिद्य तच्छब्देन परामृशति । अथ शब्दानुशासनम् । केषां शब्दानामितिवत् । पुरञ्जन्यनुनयस्तु तत्प्रसङ्गात् । **तस्य**=स्त्रीसङ्गिनः पुरञ्जनस्य शक्तेः कालेन तिरस्कारः । "एवं कृपणया बुद्ध्या" इत्येतदन्तमध्यायार्थं मत्वोक्तम् । **द्वन्द्वानि** शीतोष्णादीनि, तेषां **विपर्यये**=अस्वीकारे सति । यद्वा । द्वन्द्वेषु विपर्यये जन्मान्तरेऽन्यथाभावे सति **मुक्तिः** आत्मन इत्येव ॥ ९ ॥

**पुरञ्जनादिव्याख्यानं तपःसिद्धिः प्रचेतसाम् ।**
**दक्षमुत्पाद्य निर्वाणमध्यायार्थस्पृशोऽङ्घ्रयः ॥ १० ॥**

**निर्वाणं** प्रचेतसामित्येव । दक्षोत्पत्तिस्तु पूर्वाध्यायशेषः । अत एव दक्षमुत्पाद्येति ल्यबन्तस्योपसर्जनत्वेन निर्देशः ॥ १० ॥

नन्विह प्रकरणे प्राचीनबर्हिर्नायक इत्युक्तम् । तच्चायुक्तम् । उपक्रमोपसंहारयोः प्रचेतसामेव प्रतीतेः । अतः सन्दंशन्यायेन तेषामेव प्रकरणार्थत्वमस्तु न प्राचीनबर्हिष इति चेत् तत्राह—

**उपक्रमोपसंहारौ प्रचेतोभिस्तदात्मजैः ।**
**तथाप्यध्यात्मपारोक्ष्याच्छ्रैष्ठ्यं प्राचीनबर्हिषः ॥ ११ ॥**

**उपक्रमोपसंहारा**विति । यद्यपि प्राचीनबर्हिषः पुत्रैः प्रचेतो-

भिः प्रकरणस्योपक्रमोपसंहारौ इति दृश्यते । तथापि प्राचीनबर्हिष एव श्रैष्ठ्यम्। कुत आत्मपारोक्ष्यात्। अध्यात्मस्य तु तदधिकारेणैव परोक्षतयोपदेशात् "बर्हिष्मन्नेतदध्यात्मं पारोक्ष्येण प्रदर्शितम्" इत्युक्तम् ॥११॥

नन्वेवं किं प्रचेतसां वृत्तवर्णनेनात आह--

**पुण्यं पुत्रस्य पितुरप्यन्तःकरणशुद्धये ।**
**भवेदिति द्योतयितुं प्रचेतोवृत्तवर्णनम् ॥ १२ ॥**

**इति श्रीभागवते चतुर्थः स्कन्धः ॥**

---

**पुण्यमिति** । पुत्रस्य पुण्यं तस्यैवान्तःकरणशुद्धये स्यादिति सिद्धमेव। किन्तु तत्पितुरप्यन्तःकरणशुद्धये भवेदिति द्योतयितुं प्रचेतसां तपःकथनमित्यर्थः। तथाच **कात्यायनः**—

पुत्रेण वसुतामेति पौत्राद्रुद्रत्वमाप्नुयात्।
आदित्यत्वं प्रपौत्रेण तस्मादेवमुपास्यताम् ॥ इति ।

विवृतं चेदमाचार्यैः सूर्यस्तुतौ "मर्त्यः प्रेत्य द्युषु प्राग्वसति वसुवपुः पुत्रपुण्येन पुण्यो धर्मिष्ठः पौत्रधर्मैः" इत्यादिना। तस्मात्पुत्रपुण्येन स्वपुण्येन च शुद्धात्मनो राज्ञो ज्ञानदीप्तिर्जातेति सिद्धम् ॥ १२ ॥

इति श्रीमधुसूदनसरस्वतीकृतायां हरिलीलामृतटीकायां
**चतुर्थः स्कन्धः ।**

---

## पञ्चमः स्कन्धः ।

एवं विसर्गमुक्त्वा क्रमप्राप्तं स्थानं पञ्चमेऽभिहितमित्याह—

**पञ्चमे स्थानमध्यायैः षड्विंशत्या निरूपितम् ।**
**मर्यादापालनं स्थानं तास्तिस्रो लोकभेदतः ॥ १ ॥**

**पञ्चम** इति । स्थानं लक्षयति-**मर्यादापालनं स्थानमिति** ।

मर्यादानां कर्मार्जितभूमिकासीमानामनुल्लङ्घनम् ताः=मर्यादाः ॥ १ ॥

प्रकरणानि वक्तु लोकानाह—

**लोकाः क्षितिर्द्यौः पातालं प्रियव्रतनदुद्भवैः ।**
**क्षितेर्द्वीपादिमर्यादाः कृताः प्राक्तत्तदन्वयः ॥ २ ॥**

**लोका इति** । ननु स्थानेऽभिधेये किं प्रियव्रतवंशेन तत्राह—**प्रियव्रतेति** । प्रियव्रतेन तत्पुत्रपौत्रैश्च भूमेर्द्वीपवर्षादिव्यवस्थाः कृताः । **तत्**=तस्मात् पूर्वं तेषां वंशः कथ्यत इत्यर्थः ॥ २ ॥

ततश्चत्वारि प्रकरणानीत्याह—

**एवं च पञ्चदशभिः पञ्चभिश्च त्रिभिस्त्रिभिः ।**
**चतुःप्रकरणी प्रोक्ताऽध्यायार्थान् क्रमतःशृणु ॥ ३ ॥**

**एवं चेति** । वंशस्य प्रकरणमेकं मर्यादानां च त्रीणि इत्थं चत्वारि । तानि क्रमात्पञ्चदशभिः पञ्चभिस्त्रिभिस्त्रिभिरध्यायैरित्यर्थः । अध्यायार्थान् वक्तुमाह—**अध्यायार्थानिति** । शृण्विति शिष्यं प्रत्युक्तम् ॥ ३ ॥

**प्रियव्रताग्नीध्रनाभिष्वेकैक ऋषभे त्रयः ।**
**राजोपदेष्टृमुक्तत्वैर्भरतेऽष्टौ प्रपौत्रजे ॥ ४ ॥**

प्रियव्रताग्नीध्रनाभिष्वेकैकोऽध्यायः । ऋषभे त्रयः । **राजोपदेष्टृमुक्तत्वैरिति** । त्वशब्दः प्रत्येकम्(१) । ऋषभस्य राजत्वमुपदेष्टृत्वं मुक्तत्वं चेति क्रमात्त्रिषु(२) । मुक्तत्वे तु 'एवमनुशास्य' इत्यध्यायार्थोऽभिमतः । **प्रपौत्रजे** प्रियव्रतस्य भरतेऽष्टौ ॥ ४ ॥

क्रमादष्टानामर्थानाह—

**पुण्यैणसङ्गजडताशिबिकोदिप्रकाशनैः ।**
**तत्त्वाख्यानभवारण्यतद्व्याख्यानैः परोऽन्वये ॥ ५ ॥**

**पुण्येति** । पुण्यम् १ एणसङ्ग **एणो** हरिणः २ जडत्वम् ३ शि-

---

(१) सम्बध्यत इति शेषः । (२) अध्यायेषु इति शेषः ।

बिकाया ऊढिर्वहनम् ४ प्रकाशनं स्वप्रकटीकरणम् ५ तत्त्वनिरूपणम् ६ भवाटवी ७ तस्या व्याख्यानम् ८ इत्यष्टानामर्थाः। **परः**=पञ्चदशः। **अन्वये**=भरतवंशविषये ॥ ५ ॥

अथ भूप्रकरणमाह—

मेर्विलावृतषट्कद्विवर्षद्वीपैश्च पञ्च कौ।
दिवि क्रमात्त्रयः सूर्यध्रुवसूर्यान्तरध्रुवः ॥ ६ ॥
पातालशेषनरकैस्त्रयोऽधोभुवने मताः।

इति श्रीभागवते पञ्चमः स्कन्धः॥

---

**मेर्विले**ति। मेरुश्चेलावृतं च षट्कं चार्थाद्वर्षाणां, द्विवर्षं च द्वयोर्वर्षयोः समाहारो द्विवर्षम्। पात्रादेराकृतिगणत्वान्न ङीप्, द्वीपानि च तैः। तत्र **षोडशे** मेरुः कथ्यते। **सप्तदशे** इलावृतम्। गङ्गावतारादिस्तु पूर्वशेषः। **अष्टादशे** भद्राश्वहरिवर्षकेतुमालरम्यकहिरण्मयोत्तरकुरव इति षड्वर्षाणि। **एकोनविंशे** किंपुरुषं भारतं चेति द्वे वर्षे **विंशे तु** सप्त द्वीपानि इति **कौ**=भुवि विषये पञ्चाध्याया इत्यर्थः। स्वर्गप्रकरणमाह—**दिवी**ति। सूर्यश्च ध्रुवसूर्ययोरन्तरं च ध्रुवश्च तैः क्रमात्त्रयोऽध्यायाः। पातालप्रकरणमाह—**पातालेति**। पातालं च शेषश्च नरकाश्च तैः अधो भुवने क्रमात् त्रय इत्यर्थः ॥ ६ ॥

इति श्रीमधुसूदनसरस्वतीकृतायां हरिलीलामृतटीकायां
**पञ्चमः स्कन्धः**।

---

## षष्ठः स्कन्धः।

एवं पञ्चमार्थमुक्त्वा षष्ठे पोषणं निरूप्यत इत्याह—

षष्ठ एकोनविंशत्या पुष्टिः सानुग्रहो हरेः।
कर्मणा येन यैर्यत्र स्थातव्यं तेन तत्र ते ॥ १ ॥

तिष्ठन्तीतीह मर्यादापालनं स्थानमीरितम् ।
कृतेऽपि पातके यत्र न पातः प्रत्युतोन्नतिः ॥ २ ॥
सानुग्रहोऽजामिलस्य भुवीन्द्रस्य यथा दिवि ।
त्रिभिः षोडशभिश्चेन्द्रपापं षष्ठाष्टके द्विके ॥ ३ ॥
विश्वरूपस्य वृत्रस्य मरुतां च वधात्त्रिधा ।

**षष्ठ इति** । **पुष्टिः**=पोषणम् । तत्किमन्नादिदानेन नेत्याह–**सा पुष्टिः** हरेर्दुराचारेष्वपि भक्तेष्वनुग्रह इत्यर्थः । ननु स्थानानन्तरमेव पोषणनिरूपणे कः प्रसङ्गः, विपर्यय एव कस्मान्न स्यादिति । एतदेव परिहर्तुं कृतमपि स्थानलक्षणं स्फुटयति–**कर्मणेति** । अयमर्थः । येन विहितेन कर्मणा कर्तव्येन यैरधिकारिभिर्यत्र स्थाने स्थातव्यम् तेनैव ते तत्र तिष्ठन्ति इति मर्यादापालनम् । तच्चेरितं **पञ्चमे** भूसंस्थानादिकथनेन । यत्पुनर्विहितातिक्रमेणान्यथाकरणं तत्र कृतेऽपि भगवद्भक्तियोगान्न पातः किन्तून्नतिरेवेति मर्यादाभङ्गसव्यपेक्षत्वादनुग्रहस्य तदानन्तर्यं युक्तमित्याभिप्रेत्याह–**कृतेऽपीति** । अत्रैव ग्रन्थस्थं निदर्शनमाह–**अजामिलस्येति** । यथा निषिद्धाचरणेऽप्यनुग्रहोऽजामिलस्य । एतच्च **भुवि** । भूपातकिनामन्येषामप्युपलक्षणम् । **इन्द्रस्येति** स्वर्गिणाम् । पातालं तु(१) स्वर्गाविशिष्टमिति पृथङ्नोक्तम् । अतश्चेह महाप्रकरणद्वयमेवेत्याह–**त्रिभिः षोडशभिश्चेति** । अध्यायैः क्रमाच्चेति शेषः । द्वितीयेऽवान्तरप्रकरणान्याह–**इन्द्रपापं** विश्वरूपवृत्रमरुतां वधात्त्रिधा । तच्चाध्यायानां षट्केऽष्टके द्विके च क्रमादुक्तम् । समूहे कन्प्रत्ययः ॥१॥२॥३॥

ननु विश्वरूपविषये षट्कमित्ययुक्तम् । आद्येऽध्यायत्रये दक्षवंशोपलम्भादत आह—

दक्षान्वयस्तदुत्पत्त्यै वैश्वरूपे त्रिकेऽग्रिमे ।
वृत्राष्टके चतुष्केऽन्त्ये वृत्रमाक्चित्रकेतुता ॥ ४ ॥

**दक्षान्वय इति** । विश्वरूपसम्बन्धिनि षट्के **अग्रिमे**=आद्ये

(१) भूम्यपेक्षया इतरत्वेन साम्यात्पातालस्य स्वर्गाविशिष्टत्वम् ।

**त्रिके** दक्षान्वयः कथ्यते। किमर्थम्? तस्य विश्वरूपस्योत्पत्त्यै तत्प्रसङ्गादित्यर्थः। **वृत्रेति**। शङ्का प्राग्वत्। वृत्रप्रतिपादकाष्टके आद्ये। **अन्त्ये**ऽध्यायचतुष्के वृत्रस्यैव प्राक् चित्रकेतुत्वमासीदिति तदपि वृत्रप्रसङ्गादुक्तमित्यर्थः॥ ४॥

अथ क्रमात्पादैरध्यायार्थानाह—

**अजामिलाघनाशोक्तिर्वैष्णवैर्याम्यनिग्रहः।**
**यमेन सान्त्वनं तेषां दक्षेणाराधनं हरेः॥ ५॥**

**अजामिलेति**। **अघं**=पापम्। विष्णुपार्षदैर्यमदूतानां निरुत्तरीकरणं **निग्रहः**। **तेषां**=याम्यानाम्॥ ५॥

**नारदात् पुत्रनाशोऽस्य दौहित्राद्विश्वरूपभूः।**
**तस्य देवपुरोधस्त्वं गुरुत्वं विष्णुवर्मणि॥ ६॥**

**अस्य**=दक्षस्य। दौहित्राद्विश्वरूपस्य भूरुत्पत्तिः। सम्पदादित्वात्क्विप्। **तस्य**=विश्वरूपस्य देवपौरोहित्यं नारायणकवचे गुरुत्वमिन्द्रं प्रतीतिशेषः॥ ६॥

**तद्वधाघाद्वृत्रभयं वृत्रवासवसङ्गरः।**
**वृत्रभक्तिर्ज्ञानशौर्ये वृत्रस्य मरणं रणे॥ ७॥**

तस्य विश्वरूपस्य वधेन यदघं तस्माद्वृत्रभयमिन्द्रस्य। **वासव**=इन्द्रः॥ ७॥

**वृत्रहत्याप्रतीकारश्चित्रकेतोः सुताच्छुचः।**
**बोधोऽङ्गिरोनारदाभ्यां विद्यालाभश्च नारदात्॥ ८॥**

**शुचो**=विविधाः शोकाः। चित्रकेतोरिति त्रिष्वनुवर्त्तते। **विद्यालाभश्चेति** चकाराज्जीवोक्तिसङ्कर्षणदर्शने॥ ८॥

**गौरीशापाच्च वृत्रत्वं गर्भे शक्रमरुद्भिदा।**
**व्रतं दितिकृतं पुण्यं प्रत्यध्यायमिमेऽङ्घ्रयः॥ ९॥**

इति श्रीभागवते षष्ठः स्कन्धः।



शक्रेण मरुतां **भिदा** भेदः । **गर्भे** गर्भस्थान इत्यर्थः । **पुत्र्यं**=पुत्राय हितम् । **प्रत्यध्यायम**ध्यायमध्यायं प्रतीत्यर्थः ॥ ९ ॥

इति श्रीमधुसूदनसरस्वतीकृतायां हरिलीलामृतटीकायां

**षष्ठः स्कधः ।**

---

## सप्तमः स्कन्धः ।

एवं षष्ठे पुष्टिमुक्त्वा सप्तमे ऊतिरुच्यत इत्याह—

**सप्तमे पञ्चदशभिरध्यायैरूतिवर्णनम् ।**
**ऊतिः प्राक्कर्मजा कर्त्ता भोक्तास्मीत्यादिवासना ॥ १ ॥**

**सप्तम इति** । ननु किमवनं वान्नं वा ऊतिशब्दार्थः ? नेत्याह–**ऊतयः कर्मवासना** इत्युक्तत्वाद्रूढोऽयमत्रेत्यर्थः ॥ १ ॥

**सा प्रह्लादेतिहासेन दशाध्यायेन दर्शिता ।**
**स्वरूपतः कारणतः पञ्चाध्यायेन कर्मणा ॥ २ ॥**

नन्वस्याः किं स्वरूपं किञ्च कारणम् । तत्राह–**सेत्यादि** । **सा** वासना । दशाध्याया यस्मिन्नितिहासे स तथा । प्रह्लादेतिहासेन तस्याः स्वरूपमुक्तम् । **कारणं**=कर्म । अध्यायपञ्चकेन **कर्मणा** कर्मनिरूपणेनोक्तम् । अतोऽत्र प्रकरणद्वयम् ॥ २ ॥

उक्तमेव विवृणोति—

**प्रह्लादस्य परो रागो द्वेषः पितृपितृव्ययोः ।**
**विष्णौ तयोरविषये कर्मणोऽसुरभावदात् ॥ ३ ॥**

**प्रह्लादस्येति** । प्रह्लादस्य विष्णौ परोऽनुरागः । तत्पितृपितृव्ययोर्हिरण्यकशिपुहिरण्याक्षयोस्तस्मिन्परो द्वेष इत्येवंरूपा या वासनेत्यर्थः । **तयोः** पितृपितृव्ययोः रागद्वेषयोर्वा । उभयत्र हेतुरसुरत्वप्रापकं कर्मेत्याह–**कर्मण** इति ॥ ३ ॥

ननु तत्कर्मैव कुतो जातमित्याह—

**द्रष्टुमीशं विहन्तुं तद्वैकुण्ठे कलहान्मिथः ।**
**चतुःसनो हि प्रह्लाद इतरौ विजयो जयः ॥ ४ ॥**

**तत्**—कर्म कलहश्च एको द्रष्टुमीशं प्रवृत्त परौ तद्दर्शन विहन्तुं प्रवृत्ताविव्यतो हेतोः । ननु वैकुण्ठे प्रह्लादस्यासुरयोश्चाभावात्कः कलहप्रसङ्गः तत्राह—**चतुःसन** इति । यः प्रह्लादः स प्राक् चतुःसन आसीत् । चतुर्णामप्येकत्वविवक्षया चतुःसन इत्युक्तम् । एकमेव हि ब्रह्म तपश्चर्तुं चतुर्धावतीर्णम् । यावितरौ दैत्यौ तौ जयविजयावास्तामिति कलहप्रप्रसङ्गः । न च प्रह्लादस्य चतुःसनत्वेऽलक्ष्यत्वं शङ्क्यम् । जयविजयदर्शनेन तस्याप्यनुमातुं शक्यत्वात् । यथा च चतुःसनेन तौ स्वस्थानाच्च्यावितौ एवं स्वयमपि स्वेनैव कर्मणा च्युतः । कः खल्विह स्वकृतस्य कर्मणः फलं न भुञ्जीत, कः पुनरिह सहृदयो वासनानिरूपणं पर्यालोचयन् इदमपह्नुवीत । एतदेव विवृतमाचार्यैः **पुरुषोत्तमस्तुतौ**—

जयस्य विजयस्य च च्युतिरकुण्ठवैकुण्ठत-
श्चतुःसनरुषेति यत्तदुचितं न दौवारिके ।
मुनौ च पुरुषोत्तमत्वमपि शुद्धसत्त्वात्मके
जयत्यु दरमन्तरं कुरुत आदिराजाश्नुते ॥ इति ।

अतोऽनुचितस्यान्तरस्य करणात्तैः स्थानच्युतिलक्षणं भयमनुभूतमिति भावः ॥ ४ ॥

ततश्चेदं निर्वृत्तमित्याह—

**प्राङ्निष्कामसकामाभ्यां भक्तिभ्यां वासनाद्वयम् ।**
**द्वयोरप्येकफलता कर्मणो भोगतः क्षयात् ॥ ५ ॥**

**प्राङ्निष्कामेति** । या **प्रह्लाद**स्य भगवत्याबाल्यादहैतुकी रागवासना सा प्राग्भवीयया निष्कामया भक्त्या । निष्कामत्वं तु प्रेमातिशयात् । या इतरयोरनिमित्तद्वेषवासना सा प्राचीनया सकामया भक्त्या । सकामत्वं तु भगवत्सालोक्यात् , तद्दास्यत्वाच्च । अतो मुनिशापेन तत्-

द्धोगप्रतिबन्धात्स्वाधिकारास्थितयोराभिभवः किमितीश्वरेण न निषिद्ध इत्यु- भयत्राप्युद्भिन्नवैराङ्कुरोत्पत्तावपि जन्मान्तरेऽपि तामेव वासनामनुरुन्धाते स्म । आरब्धकर्मणो भोगेन क्षये वासनाद्वयस्य फलमेकमेवेत्याह—**द्वयो- रिति । एकफलता** भगवत्सान्निध्यलक्षणा । तस्माद्दिदृक्षातद्विघातवास- नाभ्यामेवेह पातादिहापि तदनुवृत्तिरित्युक्तमूर्तिस्वरूपम् ॥ ५ ॥

एवं स्कन्धार्थं विविच्य क्रमात्पादैरध्यायार्थानाह—

**कुमारैर्द्वाःस्थयोः शापो हिरण्यकशिपोः शुचः ।**
**ब्रह्मणो वरलाभश्च प्रह्लादस्य च सम्भवः ॥ ६ ॥**

**कुमारैरित्यादि । द्वाःस्थौ** जयविजयौ । **शुचः**=शोकाः । **वरलाभो** हिरण्यकशिपोः ॥ ६ ॥

**पित्रा परीक्षणं तस्य बालानां तेन शिक्षणम् ।**
**नारदोक्तानुवादश्च हिरण्यकशिपोर्वधः ॥ ७ ॥**

**तस्य तेनेति** तच्छब्दाभ्यां प्रह्लादः । शिक्षणमिति णिजन्तम् । नारदोक्तानुवादश्च तेन प्रह्लादेनेत्येव ॥ ७ ॥

**प्रह्लादेन नृसिंहेला ततोऽस्य शिववद्यशः ।**
**सामान्येन सदाचारस्तथा त्रिष्वाश्रमेषु च ॥ ८ ॥**

**इला**=स्तुतिः । **ततो**=नृसिंहात् । समासगतस्य बुद्ध्या विच्छेद इति प्रागुक्तम् । **अस्य**=प्रह्लादस्य । शिववत् यशः । यथा त्रिपुरवधहेतुत्वे- न हरिणा शिवस्य यशो दत्तम् एवमस्यापीत्यर्थः । तेन त्रिपुरवधाख्या- नं प्रह्लादयशसोर्निदर्शनार्थमिति भावः । एवमेवैतत् । अन्यथा तदाख्यानम- प्रसक्तं स्यात् ।

स एष भगवान्राजन् ! व्यतनोद्विहतं यशः ।
पुरा रुद्रस्य देवस्य मयेनानन्तमायिना ॥

इत्युक्तत्वाच्च । **स एष** इति येन प्रह्लादस्य यशो दत्तमित्यर्थः । **त्रिषु** ब्रह्मचारिगृहस्थवानप्रस्थानाम् । तथा चशब्दात्सदाचारः ॥ ८ ॥

परिव्राजकधर्माश्च मोक्षधर्मा गृहाश्रमे ।
श्रद्धादीनि मुमुक्षूणां यावदध्यायमङ्घ्रयः ॥ ९ ॥
इति श्रीभागवते सप्तमः स्कन्धः समाप्तः ।

**परिव्राजका** यतयः । **गृहाश्रमे** गृहस्थानामित्यर्थः । **मुमुक्षूणां** मोक्षेच्छूनां गृहस्थादीनाम् । आदिशब्दात्कामक्रोधजयादयः । **यावदध्यायं** यावन्तोऽध्यायास्तावन्तोऽङ्घ्रयः ॥ ९ ॥

इति श्रीमधुसूदनसरस्वतीकृतायां हरिलीलामृतटीकायां
सप्तमः स्कन्धः ।

## अष्टमः स्कन्धः ।

एवं सप्तमार्थमुक्त्वाऽष्टमार्थमाह—

मन्वन्तरार्थमध्यायास्त्रयोविंशतिरष्टमे ।
मन्वन्तराणि प्रत्येकं ब्रह्माहेषु चतुर्दश ॥ १ ॥
**मन्वन्तरार्थमिति मन्वन्तराणीति ॥ १ ॥**

चतुर्दशत्वमेवाह—

चत्वार्याद्येऽत्र तुर्यस्थं त्रिषु नागेन्द्रमोक्षणम् ।
द्वे पञ्चमेऽत्र षष्ठस्थं सप्तस्वमृतमन्थनम् ॥ २ ॥

**चत्वार्याद्य** इति । आद्येऽध्याये । **स्वायम्भुवस्वारोचिषोत्तमतामसाख्यानि चत्वारि** (१)**अत्रैषु** चतुर्षु मध्ये **तुर्यस्थं** चतुर्थमन्वन्तरे जातं गजेन्द्रमोक्षणं **त्रिषु** अध्यायेषूक्तम् । **द्वे पञ्चमे** पञ्चमेऽध्याये रैवतकचाक्षुषाख्ये मन्वन्तरे उक्ते । **अत्र** अनयोर्मध्ये षष्ठस्थं षष्ठे चाक्षुषाख्ये जातममृतमन्थनं **सप्तसूक्तम्** ॥ २ ॥

---

(१) मन्वन्तराणीति शेषः ।

त्रयोदशेऽष्टौ नवसु सप्तमे बलिबन्धनम् ।
त्रयोविंशे मत्स्यकथा षष्ठसप्तमसन्धिगा ॥ ३ ॥

**त्रयोदशेऽध्याये** वैवस्वतसावर्णिदक्षब्रह्मधर्मरुद्रदेवेन्द्रपूर्वपदानां सावर्णीनामष्टौ । ततः **सप्तमे** वैवस्वताख्ये जातं बलिबन्धनं **नवसूक्तम्** । चाक्षुषवैवस्वतसन्धौ जाता मत्स्यकथा **त्रयोविंशे** । अत्र गण्यमाने त्रयोविंशतिरध्यायाश्चतुर्दश मन्वन्तराणि स्युः ॥ ३ ॥

मन्वतरं सतां धर्मो मनुभिर्यत्प्रकाश्यते ।
स्मरणाचरणाख्यानैः स्वैः स्वैः सर्षिभिरन्तरे ॥ ४ ॥

ननु पुरुषस्य हेयमुपादेयं वा शास्त्राणां विषयो नच मन्वराभिधाने किमपि हातुमुपादातुं वा शक्यमत आह—**मन्वन्तरमिति** । **यद्य**स्मान्मनुभिरसौ **प्रकाश्यते**ऽतः सद्धर्मे मन्वन्तरशब्दो रूढ इत्यर्थः । अवयवार्थावर्गातस्तु अश्वकर्णादिवत् । प्रकाशनं च ऋषिसहितैर्मनुभिः स्वेस्वेऽधिकारे तपःपूतचेतसि भगवत्प्रसादादादौ धर्मतत्त्वस्मरणं, ततस्तदाचरणं, ततोऽन्येभ्यस्तत्कथनमिति क्रमेण क्रिया इत्याह **स्मरणेति** । **अन्तरम्** अवकाशेऽधिकारे इत्यर्थः ॥ ४ ॥

कः पुनस्तैः प्रकाशितो धर्म इति तमाह—

विपद्यात्मानमीशाने सम्पद्यर्थिषु चार्पयेत् ।
उभयत्र प्रतिज्ञातं निर्वहेदिति स त्रिधा ॥ ५ ॥

**विपदीति** । **स** सद्धर्मः **त्रिधा अर्थिषु** चेतिचकारादीश्वरे । **उभयत्र** सम्पदि च विपदि च । तद्यथा **विपद्यात्मानमीशानेऽर्पयेत्** । यथार्पितो गजेन्द्रेण । **सम्पदि अर्थिषु** ईश्वरे च । यथा क्षारोदेन । **उभयत्र प्रतिज्ञातं निर्वहेत्** । यथा कृतं बलिना ॥ ५ ॥

तत्त्रैविध्यमेवोन्मीलयति—

गजेन्द्रमोक्षणेऽम्भोधिमन्थने बलिबन्धने ।
स व्यक्तस्तं झषो वेत्ति तत्त्वतस्तेन ताः कथाः ॥ ६ ॥

**गजेन्द्रमोक्षणे** इति । **स** सद्धर्म एषु स्पष्टः । तं त्रिविधं धर्मं

**तत्त्वेन झषो** मत्स्यो जानाति। अत एवोपदिष्टवान्मनवे। **तेन ताः कथाः तेन** हेतुना **ताः कथा** गजेन्द्रमोक्षणादयस्तिसृः कथा ऋषिणेहोक्ता न त्वभिप्रायं विना यदृच्छयैवेत्यर्थः ॥ ६ ॥

एवं स्कन्धार्थं निरूप्याध्यायार्थमाह—

**ग्राहाद्बन्धो हरेर्मोक्षः प्राग्जन्मेति त्रिको गजे।**
**मन्दरासो विषग्रासो हरेः स्त्रीत्वं सुरे सुधा ॥ ७ ॥**

**ग्राहादित्यादिना**। बन्धोऽर्थाद्गजस्य। **ग्राहो** नक्रः। **प्राग्जन्म** इन्द्रद्युम्नत्वम्। **गजे** गजविषये। **आसः** क्षेपः समुद्रे इति शेषः। **विषग्रासो** रुद्रेणेति शेषः। **स्त्रीत्वं** मोहिनीत्वम्। **सुरे** इति जातावेकवचनम्। सुराणां सुधाप्राप्तिरित्यर्थः ॥ ७ ॥

**रणः सुरे जयः शम्भोः स्त्रीक्षेत्थं सप्तकोऽर्णवे।**
**बलेर्जयो व्रतो दित्या हरेर्जन्मार्थिता बलौ ॥ ८ ॥**

**रणः** सुराणामसुराणामिति शेषः। **स्त्रिया ईक्षा** दर्शनं भगवत्कृतस्त्रीरूपालोकनमित्यर्थः। नियमो **व्रतम्**। "व्रतमस्त्री स्यात्" इत्युक्तत्वाद्व्रत इतिपुंस्त्वम्। **अर्थिता** हरेरित्येव ॥ ८ ॥

**बलेर्दित्सा हरेर्वृद्धिर्निग्रहानुग्रहौ बलेः।**
**प्रह्लादसूक्तयश्चैवमध्यायनवको बलौ ॥ ९ ॥**

**इति श्रीभागवते हरिलीलायामष्टमः स्कन्धः ॥**

---

**दित्सा** दातुमिच्छा। **निग्रहो** बद्धत्वात्। **अनुग्रहस्तत्सान्निध्याद्युपगमात्**। **प्रह्लादसूक्तयश्चेति** चशब्दात्क्रतुसमाप्तिश्च। एवमध्यायनवको बलिविषये। त्रिकात्प्रथमस्य सप्तकात्प्रथमस्य नवकात्प्रथमस्य त्रयोदशस्य चादावर्थः उक्तः ॥ ९ ॥

इति श्रीमधुसूदनसरस्वतीविरचितायां हरिलीलामृतटीकायाम्

**अष्टमः स्कन्धः ॥**

---

# नवमः स्कन्धः ।

एवमष्टमार्थमुक्त्वा नवमस्कन्धार्थमाह—

नवमे तु चतुर्विंशत्यध्यायीशानुकीर्तनम् ।
ईशा विभूतयस्तत्र रामकृष्णादयः स्वयम् ॥ १ ॥

**नवमे त्विति** । चतुर्विंशतेरध्यायानां समाहारश्चतुर्विंशत्यध्यायी· किं तदीशानुकीर्त्तनम् । तदाह–**ईशा** इत्यादिना । **ईशा**=राजानः । तत्रापि रामकृष्णदयः स्वयमीशाः ॥ १ ॥

इतरे तन्नियोगेन तत्कथेशानुकीर्तनम् ।
इलः पृष्ध्रः शर्यातिरम्बरीषोऽजविप्रयोः ॥ २ ॥

अन्ये तु तन्नियोगादीशाः **तेषा**मीशानामीशानुवर्तिनां च कथा ईशानुकथेत्यर्थः । तानेवाह–**इल** इत्यादिना। इलः प्रथमेऽध्याये निरूपित· इत्यर्थः। **अजो** विष्णुर्**विप्रो** दुर्वासाः । अजविप्रयोरिति विषये सप्तमी । अम्बरीषस्य विष्णुभक्तिश्च**तुर्थे,** विप्रभक्तिः **पञ्चम** इत्यर्थः ॥ २ ॥

मान्धाता च हरिश्चन्द्रः सगरोऽथ भगीरथः ।
रामे राष्ट्रभ्रंशलाभौ कुशोऽथ मिथिलेश्वरः ॥ ३ ॥

राष्ट्रभ्रंशो रामस्य **दशमे,** राष्ट्रलाभस्त्वेकादशे । **मिथिलेश्वरो** जनकः ॥ ३ ॥

ऐलो रामोऽर्जुनक्षत्रवधयोः क्षत्रवृद्धगः ।
ययातेर्भुक्तिमुक्त्योश्च पूरुस्त्रिषु यदुर्द्वयोः ॥ ४ ॥

**ऐलः** पुरूरवाः । **रामो** जामदग्न्यः । **अर्जुनः** कार्त्तवीर्यः । क्षत्रमिति जातिनिर्देशात् क्षत्रियमात्रम् । अर्जुनवधश्च क्षत्रवधश्च तयोर्वधः प्रत्येकान्वयी । द्वन्द्वान्ते श्रुतत्वात् । अर्जुनवधो रामेण **पञ्चदशे,** क्षत्रवधः **षोडशे** (१)**क्षत्रवृद्धगः** क्षत्रवृद्धादीनां **भगो** विभूतिर्वंशवर्णनं **स-**

(१) क्षत्रवृद्धक इति पाठे आयोः पुत्रः क्षत्रवृद्धकः स्वार्थिकः कः । तदन्वयः सप्तदशे वर्ण्यत इत्यर्थः ।

**सदृशे**। ययातेर्भुक्तिरष्टादशे मुक्तिरेकोनविंशे। **पूरुः**=पूरुवंशः वंशवंशिनोरभेदोपचारात्। एवं **यदुर्द्वयोः** ( इत्यत्रापि ) ॥ ४ ॥

किमिति पूरुर्यदुः त्रिषु द्वयोश्चेत्यत आह—

**दौष्यन्तिरन्तिभीष्माणां प्राधान्याद्वृष्णिकृष्णयोः।**
**चतुर्विंशतिरित्येते राजानोऽध्यायनायकाः ॥ ५ ॥**

**दौष्यन्तीति। दौष्यन्तिर्भरतः, रन्तिः**। रन्तिदेवः—**भीष्मः**—शान्तनवः एते पूरुवंशे प्रधानत्वात्त्रिषु वंशादिषूक्ताः। **वृष्णेः** कृष्णस्य च प्राधान्याद्यदुवंशो द्वयोः। वृष्णिकृष्णौ द्वयोरुक्तावित्यर्थः। तत**श्चतुर्विंशतिरिति**। सत्स्वप्यन्येषु वक्तव्येषु "प्राधान्येन व्यपदेशा भवन्ति" इति न्यायेन चतुर्विंशतिरित्युक्तम्। प्राधान्यं चैषां चरित्रकथनात्, केषां चित्तु गुणोत्कर्षात् ॥ ५ ॥

नन्वेवं चेद्विंशतिरेव स्युर्न तूक्तसङ्ख्या इत्यत आह—

**रामौ ययात्यम्बरीषौ चत्वारोऽष्टौ हि कर्मभिः।**
**त्रयोदशैकादशभिः क्रमात्तत्रार्कसोमजाः ॥ ६ ॥**

**इति श्रीभागवते हरिलीलायां नवमः स्कन्धः ॥**

---

**रामाविति**। रामश्च रामश्च रामौ दाशरथिजामदग्न्यौ। ययातिश्चाम्बरीषश्च तौ। एते यद्यपि चत्वारस्तथा**प्यष्टौ** ज्ञेयाः। **हि**=यस्मा**त्कर्मभि**श्चरित्रैर्भिन्नाः। कर्मभेदाद्धि कर्तृभेदः। नहि य एव चैत्रः पक्ता स एव भोक्ता पाकविशिष्टस्यान्यत्वात्। एवं रामादिष्वपि तत्तत्कर्मविशिष्टत्वादन्यत्वमेव। दर्शिते चैषां प्रत्येकं द्वे द्वे कर्मणी। अतश्चतुर्णामष्टमत्वं युक्तमिति सुष्ठूक्तं **चतुर्विंशतिरिति**। **त्रयोदशेति**। त्रयोदशभिः सूर्यवंश्या राजानः। **एकादशभिः** सोमवंश्याः। सोमवंशस्योत्तरत्र व्याख्यानं दशमस्य बीजार्थम् ॥ ६ ॥

इति श्रीमधुसूदनसरस्वतीविरचितायां हरिलीलामृतव्याख्यायां

**नवमः स्कन्धः ॥**

# दशमः स्कन्धः ।

एवं नवमार्थमुक्त्वा क्रमात्प्राप्तं दशमार्थमाह—

**निरोधो दशमे स्कन्धे नवत्यध्याय ईरितः ।**
**निरोधो नाम सृष्टानां समाहारश्चतुर्विधः ॥ १ ॥**

**निरोध** इति । नवतिरध्याया अस्मिन् स्कन्धे स तथा । निरोधलक्षणमाह—**निरोधो नामेति** । तद्भेदानाह-**चतुर्विधः** ॥ १ ॥

तद्विवृणोति—

**नैमित्तिकः प्राकृतिको ब्रह्मणोऽन्तेदिनायुषोः ।**
**नित्यः प्रतिक्षणं मुक्तिरात्यन्तिक इति स्मृतः ॥ २ ॥**

**नैमित्तिक** इति । यो ब्रह्मणो दिनस्यान्ते युगसहस्रावसाने संहारः स **नैमित्तिकः** । निमित्तं ब्रह्मनिद्रा तद्धेतुकत्वात् । यस्तु ब्रह्मण आयुषोऽन्ते द्विपरार्द्धावसाने स **प्राकृतिकः** । तत्र हि महदादिसप्तप्रकृतयः प्रधाने लीयन्ते । यस्तु क्षणे क्षणे कालेन पच्यमानेषु भूतेष्वपचयः स **नित्यः** । प्रत्यभिज्ञा तु सेयं दीपज्वालेतिवदितिभावः । स च

नित्यदा सर्वभूतानां ब्रह्मादीनां परन्तप ! ।
उत्पत्तिप्रलयावेके सूक्ष्मज्ञानाः प्रचक्षते ॥

इत्यत्रोक्तो ऽहरहर्भूतसङ्क्षयो वा नित्यः । यस्तु ब्रह्मणो जीवत्वोपाधीनां महदादीनां तत्साक्षात्कारादत्यन्तमुच्छेदः स मुक्त्याख्य **आत्यन्तिकः** । ततः परं संसाराभावात् । ननु किमेतच्चातुर्विध्यं स्वकल्पितं नेत्याह—**इति स्मृत** ऋषिभिरित्यर्थः । स्मरणं च—

नित्यो नैमित्तिकश्चैव तथा प्राकृतिको लयः ।
आत्यान्तिकश्च कथितः कालस्य गतिरीदृशी ॥ इति ॥ २ ॥

नैमित्तिकस्य भेदान्तरमाह—

**नैमित्तिको निरोधोऽन्यो धर्मग्लानिनिमित्तकः ।**
**भूमिभारावताराख्यो यदर्थं जन्म माप्तेः ॥ ३ ॥**

**नैमित्तिक** इति । **अन्यो** भूभारावताराख्यो **नैमित्तिको** लयः ।

तत्र हि धर्मग्लानिर्निमित्तम् । यदर्थं च लक्ष्मीपतेर्जन्म । तदुक्तम्—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ! ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ इति ।

अवश्यं चैतद्द्रष्टव्यम् । अन्यथा पञ्चमलयस्वीकाराप्रसङ्गात् । नचाद्ययोरस्यान्तर्भावः । तन्निमित्तस्याभावात् । नाप्यन्तयोः कादाचित्कत्वात् , अनात्यन्तिकत्वाच्च । न चायं नास्त्येव, पुराणेषु शतशः श्रुतत्वात् ॥ ३ ॥

कः पुनरेष दशमार्थ इति तत्राह—

**स एष दशमे प्रोक्तो मुक्तिरेकादशे ततः ।**
**त्रयोऽन्ये द्वादशे शुद्धं निरूपयितुमाश्रयम् ॥ ४ ॥**

**स एष इति** । भूभारावतारारूयः । **त्रयः** प्राकृतनित्यनैमित्तिकाः **द्वादशस्य** चतुर्थेऽध्याये । ननु तत्राश्रयेऽभिधेये किं लयोक्त्या तत्राह— **शुद्धमिति** । निरुध्यमानेभ्यः पृथग्भूतं कलया संसृष्टमित्यर्थः । तस्मादाश्रयोपयोगादेषां तत्रोक्तिर्युक्ता । नचाश्रयं शुद्धं वक्तुं भूभारनिरोधोऽपि तत्रोच्यतामिति वाच्यम् । साक्षादाश्रयस्यैव हरेरिह कर्त्तव्यत्वेन नाशशङ्काया अनुदयात् । "तमाहुरात्यन्तिकमङ्गसम्प्लवं" इत्यात्यन्तिकस्तु तत्रोक्तोप्यनुक्तवत् । साधनानिर्देशेन प्राधान्याभावात् । साधनं च कर्मज्ञाने इति वक्ष्यत्येकादशे ॥ ४ ॥

न चावतारान्तरेणापि भूभारनिरोधस्य सुकरत्वात्तदेव दशमेऽभिधेयमिति कृष्णकथैव किन्न कथ्यत इत्यत आह—

**तस्यावतारा: कर्त्तारो हरेस्तेषु महत्तमः ।**
**कृष्णावतारस्तस्यातश्चरितं दशमे मतम् ॥ ५ ॥**

**तस्यावतारा** इत्यादि । तेऽवतारा महान्तः अयमेव कृष्णावतारस्तेष्वतिशयेन महान् । अतस्तस्य महत्तमत्वात्तच्चरितं दशमे विस्तृतं कृतम् । महत्तमत्वं तु अलुप्तसर्वशक्तित्वात् । "कृष्णस्तु भगवान्स्वयम्" इत्युक्तत्वाच्च । अयमर्थः । येन केनाप्यवतारेण भूभारनिरोधेऽपि श्रीकृष्णस्य प्रधानत्वात्तद्द्वारैवोक्तः । नचास्य निरोधस्य तृतीयादिष्वपि सद्भावात्तत्राभिधे-

यसङ्करः। प्रसङ्गतः सद्भावेन सङ्करे सर्वस्य सर्वत्र सम्भवादतिप्रसङ्गप्राप्तेः ॥५॥

एवं स्कन्धार्थं समाधाय प्रकरणान्याह—

**गोकुले मथुरायां तद्द्वारकायां कृतं त्रिधा।**
**चतुश्चत्वारिंशतोक्तं सप्तभिस्तत्परैः क्रमात्॥ ६ ॥ (१)**

**गोकुल इति। तत्** कृष्णचरितं गोकुलादिभेदेन **त्रिधा कृतम्।** अतोऽत्र प्रकरणत्रयमित्यर्थः। तेष्वध्यायान्विभजति—**क्रमात् चतुश्चत्वारिंशतेति। तत्परैः** ऊनचत्वारिंशत्सङ्ख्यैरित्यर्थः॥ ६ ॥

गोकुलकृते पञ्चावान्तरप्रकरणान्याह प्राकट्येत्यादिना।

**प्राकट्यबाल्यपौगण्डकैशोरप्रौढिभेदतः।**
**पञ्चधा गोकुलकृतं तच्च कंसवधाभिधम्॥ ७ ॥ (२)**

**प्राकट्यं** प्रकटता। बाल्यादयो वयोभेदास्तल्लक्षणं तु—

कौमारं पञ्चमाक्रान्तं पौगण्डं दशमावधि।
कैशोरमापञ्चदशाद्यौवनं तु ततः परम्॥

**इति श्रीधरस्वामिलिखितम्।**

---

आपञ्चवर्षाद्बाल्यं स्यात्पौगण्डं नववर्षतः।
आषोडशाच्च कैशोरं यौवनं च ततः परम्॥

इति स्मृतावुक्तम्। यद्यपि "एकादशसमास्तत्र गूढार्चिः सबलोऽवसत्" इति **तृतीय**स्कन्धोक्त्या गोकुले नैतावन्ति वर्षाणि स्थितिस्तथापि तत्तदवस्थायोग्यकार्यस्य प्रकटितत्वादेवमुच्यते। यद्वा। एकादशसमा गूढार्चिस्ततः परं प्रकटार्चिरिति व्याख्येयम्। वयोऽन्यथानुपपत्तिरेवात्र प्रमाणम्। अस्मिंश्च पक्षे उपनयनं द्वाविंशे वर्षे विज्ञेयम्। नचान्यथाकल्पने प्रमाणमस्ति। तस्य पञ्चविधस्य गोकुलकृतस्येह कंसवध इति संज्ञा

---

(१) अत्र गोकुलचरितमादितश्चतुश्चत्वारिंशद्भिरध्यायैः, मथुराचरितं ततः सप्तभिः, द्वारकाचरितमूनचत्वारिंशद्भिर्वर्णितम्। एवं नवतेरध्यायानां विभाग इति ध्येयम्।

(२) अत्र तस्य कंसवधोऽङ्घ्रिप्राभेरिति टीकाभिमतः पाठः।

ज्ञातुश्च क्रियते तदुपयोगश्चत्वारिंशदिमेऽध्यायाः। कंसवधोऽङ्घ्रिभिरित्यत्र लाघवेन छन्दोनुरोधेन व्यवहारः। बाल्यादिभेदचतुष्के "एवं विहारैः कौमारैः कौमारं जहतुर्व्रजे" "ततश्च पौगण्डवयः श्रितौ व्रजे" "किशोरौ श्यामलश्वेतौ "प्रगल्भलीलाहसितावलोकैः" इत्यादिमूलश्लोका मूलम्। प्रगल्भलीलेति लीलायाः। प्रौढत्वं भगवत्प्रौढिनान्तरीयकम् ॥ ७ ॥

प्राकट्यादिषु पञ्चसु क्रमादध्यायान्विभजते—

**चतुर्भिर्दशभिः शक्रैः सप्तभिर्नवभिः क्रमात्।**
**कंसभीर्भाविनः कृष्णाद्देवक्यां तस्य सम्भवः ॥ ८ ॥**
**जातस्य गोकुलप्राप्तिर्निद्रोक्तात्कंसभीः पुनः।**
**व्रजे जन्मोद्भवस्तस्य तेनाथो पूतनावधः ॥ ९ ॥**

**चतुर्भिरित्यादि**। चतुर्भिः प्राकट्यम्। तस्य द्वितीयाध्याय एव वृत्तत्वेऽपि "किं मया हतया मन्द जातः खलु तवान्तकृत्" इति योगनिद्रोक्त्या कंसादीन्प्रति प्रकटत्वस्य चतुर्थे दर्शितत्वाच्चतुर्भिरित्युक्तम्। **शक्रैरिन्द्रसङ्ख्यैः** चतुर्दशभिरित्यर्थः। एवं प्रकरणार्थमुक्त्वा गोकुलकृते क्रमात्पादैरध्यायार्थानाह—**कंसभीरित्यादिना**। **भाविनो**=भविष्यतः "अस्यास्त्वामष्टमो गर्भो हन्ता" इत्युक्तत्वाद्भावित्वम्। **निद्रोक्तात्**=वाक्यात्। **जातस्येति** भावे क्तः। प्राकट्यमुक्त्वा बाल्यमाह—**व्रज** इत्यादिना। तस्य तेनेति तच्छब्दाभ्यां कृष्णः। **अथ**=उत्सवानन्तरम् ॥ ८ ॥ ९ ॥

**अनस्तृणावर्त्तभङ्गस्तस्य नामानि चापलम्।**
**दामोदरत्वमटनं यमलार्जुनभञ्जनम् ॥ १० ॥**

**अनः** शकटम्। **नामानि** नामकरणम् ॥ १० ॥

**वधश्च वत्सबकयोस्तथाघासुरभोगिनः।**
**वत्सचोरब्रह्ममोहो ब्रह्मणा स्तवनं हरेः ॥ ११ ॥**

**तथाघासुरभोगिन** इति तथाशब्दाद्वधः। **भोगी**=सर्पः। वत्सान् चोरयतीति वत्सचोरः स चासौ ब्रह्मा च तस्य मोहः ॥ ११ ॥

दशभिर्बाल्यमुक्त्वा पौगण्डमाह—

**रामेण धेनुकवधः कालियस्य स्वयं दमः ।**

**व्रजस्य रक्षणं दावात्प्रालम्बो हलिना वधः ॥ १२ ॥**

**रामेणे**ति तृतीया करणे न कर्त्तरि । इह स्कन्धे भगवत एव कथानायकत्वेन कर्त्तृत्वात् । ततश्च रामद्वारा हरिणा धेनुकवधः कृत इत्यर्थः । अत एवोत्तरवाक्ये स्वयंग्रहणम् । एवं वक्ष्यमाणेषु प्रद्युम्नार्जुनभीमेषु । तदुक्तम् "यास्यन्त्यदर्शनमलं बलपार्थभीमव्याजाह्वयेन हरिणा निलयं तदीयम्" इति । **दावात्**=वनाग्नेः । **प्रालम्बः**=प्रलम्बसम्बन्धी । **हलिना** रामेण ॥ १२ ॥

**दावाद्गोत्राणमैषीके प्रावृट्शरदृतुश्रियौ ।**

**गोप्यानन्दो वेणुरवात् गोपीनामम्बिकार्चने ॥ १३ ॥**

**ऐषीके**=इषीकावने । प्रावृट्शरच्च ते एव ऋतू तयोः **श्रियौ** शोभे । **रवः** शब्दः । अम्बिकार्चने क्रियमाणे सति ॥१३॥

**यज्वपत्नीप्रसादश्च भङ्ग इन्द्रमखस्य च ।**

**गोवर्द्धनस्योद्धरणं गोपीनां देवतामतिः ॥ १४ ॥**

**यज्वानो**=याज्ञिकाः । अनुक्तेऽपि नाम्नि भगवत एव कर्त्तृत्वं ज्ञेयम् । **देवतामतिः** कृष्णे देवोऽयमिति बुद्धिः ॥ १४ ॥

**कृष्णाभिषेको गोदेवैर्वरुणान्नन्दमोक्षणम् ।**

**सम्भोगो निशि गोपीभिर्विप्रलम्भोलसद्वने ॥ १५ ॥**

**गोदेवैः** गावश्च देवाश्च तैः । चतुर्दशभिरध्यायैः पौगण्डमुक्त्वा कौमारमाह— **सम्भोग** इत्यादि । **सम्भोगः**=सुरतम् । **विप्रलम्भो**=वियोगः, गोपीभिरित्येव । **लस**च्छोभमानं वनम् ॥ १५ ॥

**गोपीविरहगीतानि ताभिः सञ्जल्पनं हरेः ।**

**रासक्रीडा च ललिता मोक्षो विद्याध्रयक्षयोः ॥ १६ ॥**

**सञ्जल्पनं**=सुखगोष्ठी । **ललिता** रम्या हरेर्गोपीभिरित्येव । **विद्याध्रो**=विद्याधरः सुदर्शनः । मूलविभुजादित्वात्कः । **यक्षः**=शङ्खचूडः १६

सप्तभिः कैशोरमुक्त्वा नवभिः प्रौढिमाह—

**व्रजस्थगोपिकागीतं हतेऽरिष्टे च कंसभीः।**
**केशिव्योमवधश्चैवाक्रूरयानं व्रजं प्रति॥ १७॥**

**हतेऽरिष्टे** इति सप्तम्यन्तं गुणभूतं प्रथमान्तं प्रधानम्। केशी च व्योमश्च तयोर्वधः। चकारान्नारदोक्तयश्च॥ १७॥

**मथुराकृष्णयानं चाक्रूरेणाशु हरेः स्तुतिः।**
**कृष्णस्य मथुरालोकः कंसमल्लरणोद्यमः॥ १८॥**

**मथुराकृष्णयानं** चेति चकाराद्गोपीविरहदुःखं च। अक्रूरस्तदुपाम-न्त्र्येत्यादि तूत्तराध्यायबीजम्। कंसस्य मल्लास्तेषां रणोद्यमः। कुवलयापी-डवधस्तु मल्लवधप्रसङ्गात्॥ १८॥

**कृष्णेन मल्लहननं हते कंसे सुरोत्सवः।**
**चतुश्चत्वारिंशदिमेऽध्यायाः कंसवधेऽङ्घ्रिभिः॥ १९॥**

**कंसवध** इति। पञ्चविधस्यापि गोकुलकृतस्य कंसवधसंज्ञेति प्रागुक्तम्॥ १९॥

अथ मथुराकृते क्रमात्पादैरध्यायार्थानाह—

**कृष्णस्य विद्योपादानमुद्धवस्य व्रजागमः।**
**आश्वासनं च गोपीनां कुब्जाक्रूरप्रियं हरेः॥ २०॥**

**कृष्णस्येति**। गोपीनामाश्वासनमुद्धवेनेति विपरिणमनीयम्। कुब्जा चाक्रूरश्च तयोः प्रियं तद्गृहगमनाद्धरेः सम्बन्धेन॥ २०॥

**सङ्गोऽक्रूरस्य गुरुभिर्जरासन्धपराभवः।**
**यवनस्य वधोऽध्यायैः सप्तभिर्माथुरं यशः॥ २१॥**

सप्तभिरध्यायैर्माथुरं यशः॥ २१॥

अथ द्वारकाकृते क्रमात्पादैरध्यायार्थानाह **कृष्ण** इत्यादिना।

**कृष्णेऽभिलाषो रुक्मिण्या रुक्मिणीहरणं हरेः।**
**रुक्मिणश्च पराभूतिः प्रद्युम्नाच्छम्बरक्षयः॥ २२॥**

**पराभूतिः**=पराभवः। रुक्मिणश्चेति चकारादन्येषां राज्ञाम्॥ २२॥

**स्यमन्तकस्याहरणं सत्यभामासमुद्वहः ।**
**कालिन्द्यादिविवाहश्च भौमं हत्वा द्रुमाहृतिः ॥ २३ ॥**

**आहरण**मानयनम् ऋक्षसकाशात् । **समुद्वहो** विवाहः स च पूर्वाध्यायान्तस्थोऽप्युत्तराध्यायार्थ इति मत्वोक्तम् । **कालिन्दी**= यमुना । आदिशब्दान्मित्रवृन्दा नाग्निजिती भद्रा लक्ष्मणा । **द्रुमस्य**= पारिजातस्याहृतिरानयनम् ॥ २३ ॥

**रुक्मिण्यां नर्म रहसि रुक्म्यन्तो नप्तुरुद्वहे ।**
**बाणेन बन्धनं नप्तुर्बाणस्य हरिणा जयः ॥ २४ ॥**
**नृगस्य सरटत्वान्तो हलिना यमुनाभिदा ।**
**काशीशपौण्ड्रकवधो रामेण द्विविदक्षयः ॥ २५ ॥**

**नर्म**=परिहासः । रुक्मिणः अन्तो वधः नप्तुरनिरुद्धस्य **उद्वहे**= विवाहे । **सरटत्वं**=कृकलासत्वम् । **भिदा** आकर्षणम् । काशीशपौण्ड्रकयोर्वधः, हरिणेतिज्ञेयम् , नतु हलिनेति । उत्तरत्र रामग्रहणात् ॥ २५ ॥

**पराभवः कुरूणां च हरेर्गार्हस्थ्यमद्भुतम् ।**
**जरासन्धवधे मन्त्रो युधिष्ठिरसमागमः ॥ २६ ॥**
**जरासन्धवधो भीमाद्दिग्जयश्चार्जुनादिभिः ।**

**पराभव** इत्यादिसार्द्धश्लोकः स्पष्टः ॥ २६ ॥

**शिशुपालवधो यज्ञे दुर्योधनपराभवः ॥ २७ ॥**

शिशुपालवधो हरेरित्येव । दुर्योधनपराभवो यज्ञे ॥ २७ ॥

**साल्वस्य युद्धं यदुभिः साल्वस्य हरिणा वधः ।**
**दन्तवक्त्रस्य सूतान्तो वल्वलान्तश्च सीरिणा ॥ २८ ॥**

दन्तवक्त्रस्य हरिणा वधः । **सूतान्तः** सीरिणा । वल्वलसूतयोर्वधः एकस्मिन्नध्याय इत्यर्थः । **वल्वलो** दैत्यभेदः ॥ २८ ॥

**श्रीदामकृष्णसञ्जल्पः श्रीदाम्नः सम्पदद्भुता ।**
**सुहृत्सङ्गः कुरुक्षेत्रे कृष्णोद्वाहादिवर्णनम् ॥ २९ ॥**

श्रीदामेति नाम मूलेऽप्रयुक्तमपि "श्रीदामरङ्कभक्तार्थां भूम्यानीते

तत्र कर्मनिष्ठप्रकरणार्थं विवेक्तुमाह—

**पञ्चाध्यायास्तयोराद्यं तत्राद्ये युगपत्क्षयः ।**
**विष्णुगुप्ते यदुकुले विप्रशापाद्विरक्तये ॥ २ ॥**

**पञ्चाध्यायास्तयोराद्यमिति** । प्रथमाध्यायार्थमाह–**तत्रेति** । तत्राद्येऽध्याये यदूनामपि कुलेऽपि **विष्णुगुप्तेऽपि** विप्रशापाद्युगपत क्षयः । स त्वन्येषां वैराग्यार्थम् । को नाम हि महाबलानां भगवत्पालितानामपि यदूनां कुलं शापमात्रादेव क्षणेन क्षीणमवेक्ष्य संसृतौ न विरज्येत् । शापेन कुलस्य युगपद्व्याप्यत्वात् क्षययौगपद्यम् । क्रमक्षयस्तु त्रिंशे ॥ २ ॥

**द्वौ चतुष्टयमेको द्वौ प्रश्नाः शेषेषु सोत्तराः ।**
**ज्ञातुं भागवतान्धर्मान पुंसो मायां तदत्ययम् ॥ ३ ॥**

एवं प्रथमाध्यायार्थमुक्त्वा शेषाध्यायचतुष्टयार्थान् सङ्गृह्णाति–**द्वावित्यादि** । द्वौ सोत्तरौ प्रश्नौ **द्वितीये** । चत्वारस्**तृतीये**, **एकं चतुर्थे**, द्वौ **पञ्चमे**, शेषेषु चतुर्षु एवं नव प्रश्ना उत्तराणि च स्युः । तानेवाह–**ज्ञातुमिति** । अत्र ज्ञातुमिति नवभिर्द्वितीयान्तैः सम्बध्यते । तस्य च निमिश्चक्र इत्यनेन सहान्वयः । **भागवतान्**=धर्मान् पुंसः पुरुषान् । **तदत्ययं** तस्या मायाया अत्ययं नाशहेतुम् ॥ ३ ॥

**ब्रह्मकर्मावतारालिमभक्ताप्तिं युगस्थितिम् ।**
**नव प्रश्नान्निमिश्चक्रे तानाचख्युर्नवार्षभाः ॥ ४ ॥**

अवतारा**णामालिं** मालाम् । **अभक्ताप्तिम्**=अभक्तः किं फलं प्राप्नोतीति । **युगस्थितिम्** युगधर्मम् **आचख्युः**=सोत्तरांश्चक्रुः । **आर्षभा**=ऋषभपुत्राः । स्पष्टमन्यत ॥ ४ ॥

अथ क्रमात्पादैस्तदुत्तराण्याह—

**सर्वकर्मार्पणं विष्णौ रागद्वेषविवर्जिताः ।**
**मिथ्यार्थदर्शनासक्तिर्विपर्ययविमर्शनम् ॥ ५ ॥**

सर्वकर्मार्पणं विष्णौ भागवतो धर्मः । रागद्वेषविवर्जिता **भागव-**

**ताः** पुरुषाः। मिथ्याभूतस्यार्थस्य दर्शने आसक्तिर्यया सा मायेत्यर्थः। दृश्यजातमसत् आत्मा तु सन्निति विपर्ययस्तस्य **विमर्शनं**=युक्त्या स्थिरीकरणं स मायाया अत्ययः॥ ५॥

**सर्वत्रानुगतं शुद्धं वेदतन्त्राच्युतार्चनम्।**
**पुरुषादिवपुर्लीलाकालचक्रपरिभ्रमः॥ ६॥**

सर्वत्र जाग्रदाद्यवस्थास्वनुस्यूतं **शुद्धं** कर्तृत्वाद्यस्पृष्टं ब्रह्म। वेदश्च तन्त्रं च पाञ्चरात्रं तन्मात्रेणाच्युतस्यार्चनं कर्म। **पुरुषादिवपुर्लीला**-वतारादिः। **कालचक्रपरिभ्रमो** भक्तस्य फलम्॥ ६॥

**ध्यानं योगोऽर्चनं स्तोत्रमुत्तराणि नवाङ्घ्रिभिः।**
**धर्मे भागवतेऽभ्यासः पुंभिर्भागवतैः सह॥ ७॥**
**जितमायस्य धाम स्वमारोढुं भूमिकोत्तरा।**
**मायाजयोऽधरा भक्तिर्ज्ञानकर्मसमुच्चयात्॥ ८॥**

ध्यानं योगोऽर्चनं स्तोत्रं क्रमात्कृतादिषु चतुर्ष्विति युगस्थितिः। ननु किमेते नवैव प्रश्नाः? किमिति चामीषामध्यायचतुष्टयेनाभिधानमिति। तत्र भूमिकाचतुष्टयभेदेन परिहरति—**धर्म इत्यादि**। एषा पुरुषस्य **स्वं धामारोढुमुत्तरा**ऽत्युत्तमा भूमिका यत्पूर्वभूमिकाभ्यासबलाज्जितमायस्य सतो भागवतैः पुरुषैः सह भागवते धर्मेऽभ्यासः। अस्याश्च मोक्षेऽतिसन्निकृष्टत्वादत्युत्तमत्वम्। यस्माद्भ्रष्टः संसारे पतितः तत् **स्वं धाम** तदस्यामाद्यस्य प्रश्नद्वयस्योपयोग इत्युक्तं स्यात्। उत्तमामाह—**मायाजय** इति। इयमधरा यद्भक्त्यादिसमुच्चयान्मायाजयः। समुच्चयश्चैषां फलोत्पत्तौ परस्परसाहित्यम्। अधरत्वं तूक्तापेक्षया अस्यां मायादिचतुष्टस्योपयोगः। मायाजय इत्यनेन मायाप्रश्नः। माया हि जयार्थं पृष्टा। भक्तिग्रहणेन तदत्ययप्रश्नः। भक्तिर्हि तज्जयहेतुः।

इति भागवतान्धर्मान् शिक्षन् भक्त्या तदुत्थया।
नारायणपरो मायामञ्जस्तरति दुस्तराम्॥

इत्युक्तत्वात्। **ज्ञानं** ब्रह्म। **कर्म** कर्मैव॥ ७॥ ८॥

मध्यमभूमिकामाह अवतारकथा इति ।

**अवतारकथानोऽतः काम्यत्यागेशकीर्त्तने ।**

**इति भूमेश्चतसृभिरध्यायानां चतुष्टयम् ॥ ९ ॥**

**अत** इत्युत्तमभूमेः सकाशात् । **अधरा** मध्यमेत्यर्थः । अस्यां सप्तमप्रश्नस्योपयोगः । हीनामाह —अतः **काम्यत्यागेशकीर्त्तने** इति । अत इति मध्यमभूमेः सकाशात् अधरा हीनेत्यर्थः । अस्यामष्टमनवमोपयोगः । काम्यत्याग इत्यनेन हि अभक्ताप्तिप्रश्नः । **पञ्चमाध्याये** काम्यस्य कर्मणो हेयत्वाभिधानात्तत्त्यागः । ध्यानयोगार्चनानामुक्तेष्वेवान्तर्भावं मत्वा प्राधान्यादीशकीर्तनमिति स्तोत्रमात्रं गृहीतम् । एवमध्यायचतुष्के भूमिकाभेदान्नवप्रश्नसमावेश इत्याह–**इति भूमेरिति** ॥९॥

ननु कुतः पुनरिदं कर्मनिष्ठाप्रकरणमिति तत्राह—

**वसुदेवाय जायन्तेयोपाख्यानमिदं जगौ ।**

**मुमुक्षवे द्वारवत्यां नारदस्तद्गृहागतः ॥ १० ॥**

**वसुदेवायेति ।**

त्वमप्येतान्महाराज धर्मान्भागवतान् श्रुतान् ।

आस्थितः श्रद्धया युक्तो निःसङ्गो यास्यसे परम् ॥

इत्युक्तत्वादस्य कर्मनिष्ठात्वमितिभावः । **जायन्तेयाः**=जयन्तीपुत्रा नव योगिनः ॥ १० ॥

अध्यायपञ्चकार्थमुक्त्वा ज्ञाननिष्ठां वक्तुं षष्ठाध्यायार्थमाह—

**विष्णोरभ्यर्थना देवैः स्ववर्सेत्युद्धवेन च ।**

**स्वधाम नय मेत्यूचे षष्ठे संवादकारणम् ॥ ११ ॥**

**विष्णोरित्यादि** । **संवादः** कृष्णोद्धवयोः । तस्य कारणं **षष्ठे**-ऊचे । कर्त्तरि लकारः । यतो देवैर्विष्णोरभ्यर्थना कृता । **स्वः** स्वर्गे **वस** त्वमिति । **उद्धवेति** । उद्धवेन च कृता(१)**स्वं धाम** स्थानं **नय मामिति** । अतः स्वस्थानमधितिष्ठासुना भगवता उद्धवस्य लोकहितार्थमिहावस्थान-

(१) अभ्यर्थनेति पूर्वेणान्वयः ।

मिच्छता तत्त्वोपदेशः कृतः। स तयोः संवादहेतुरित्यर्थः। एतेनान्यैरप्ये-तदाचार्यमुखेन ज्ञेयमिति गम्यते। तथाहि लब्धं सम्यक् स्यात्। "आचार्यवान्पुरुषो वेद" इति श्रुतेः॥ ११॥

एवं कर्मनिष्ठाप्रकरणार्थं संवादकारणं च विविच्य ज्ञाननिष्ठाप्रक-रणार्थं वक्तुं शेषाध्यायार्थं सङ्गृह्णाति। **चतुर्धेत्यादिना** सार्द्धेन।

**चतुर्द्धा त्रींस्तथैकं द्वौ द्वावेकं चैककं द्विधा।**
**द्वौ द्विधा त्रींश्चतुर्द्धैकमेकमेकं च सोत्तरान्॥ १२॥**
**प्रश्नान् शेषेषु हित्वान्त्यौ ममाहंलयदर्शनौ।**

**अन्त्यौ** त्रिंशैकत्रिंशौ त्यक्त्वा **शेषेषु** सप्तमादिषु त्रयोविंशतिसङ्-ख्येषु **एतान्सोत्तरान्प्रश्नानृषिरूचे** इत्यन्वयः। तत्रैकः प्रश्नस्तदुत्तरं चैकम्। तच्चतुर्धोक्तं भगवता चतुर्षु चाध्यायेषु। एवमुत्तरत्र त्रिषु धाप्र-त्ययान्तेषु। त्रीन्प्रश्नान्सोत्तरान्**पञ्चम** ऊचे, एकं **षष्ठे**। एवमुत्तरत्र नवसु सङ्ख्याशब्देषु। ततश्च द्वाविंशतिप्रश्ना उत्तराणि च, अध्यायास्तु त्रयो-विंशतिः। उत्तरभेदा विवरिष्यन्ते **ममेत्यादिना**। अन्त्ययोरर्थः—ममाह-मोर्लयो ममाहंलयस्तं दर्शयेते इति ममाहंलयदर्शनावन्त्यौ। तत्र त्रिंशे **ममत्वलयः**। स च स्वयं ज्ञातिक्षयं पश्यतो हरेस्तदुपेक्षया गम्यते। एकत्रिंशे **त्वहंलयः** स तु भगवतो देहत्यागाद्गम्यते। एतौ च ज्ञानो-त्पत्तेर्लिङ्गभूताविति ज्ञाननिष्ठान्ते दर्शितौ॥ १२॥

अथ तान्द्वाविंशतिप्रश्नानाह—**सङ्गेत्यादि**पञ्चभिः।

**सङ्गत्याग उपायस्य सत्सङ्गासङ्गयोः सताम्।**
**भक्तेर्जीवस्य विषयासक्तौ दृष्टेऽपि दूषणे॥ १३॥**
**हेतोर्हंससनंदादिसंवादस्योत्तमस्य च।**
**श्रेयस्सु ध्यानयोगस्य सिद्धीनां च विभूतिवत्॥ १४॥**
**वर्णाश्रमादिधर्मस्य ज्ञानादीनां यमादिवत्।**
**गुणदोषापवादस्य तत्त्वसङ्ख्याव्यवस्थितेः॥ १५॥**
**क्षेत्रक्षेत्रज्ञभेदस्य देहयोगावियोगयोः।**
**अभिमानानिवृत्तेश्च क्रियायोगस्य संस्तुतौ॥ १६॥**

**अधिष्ठानस्य भक्तेश्च परस्याः सम्बुभुत्सया ।**
**प्रश्नान्द्वाविंशतिं चक्रे कृष्णं प्रत्युद्धवः क्रमात् ॥ १७ ॥**

अत्र च द्वाविंशतेः षष्ठ्यन्तानां सम्बुभुत्सयोद्धवः प्रश्नान् द्वाविंशतिं चक्र इत्यनेनान्वयः । वतिरपि षष्ठ्यर्थ एवेति न तदन्तयोः षष्ठ्यन्तत्व-हानिः । सङ्ख्यागे उपायस्य सम्बुभुत्सयोद्धवः प्रश्नं चक्रे । एवमन्येषु । **सत**=एकरूपस्यात्मनः**सङ्गासङ्गयो**र्बन्धमोक्षयोः। **सतां**=साधूनाम् **दोष-दर्शनेऽपि** जनानां विषयासक्तौ हेतोः । **सनन्दः** सनन्दनः । **श्रेय-स्सु** सत्कर्मसु मध्ये उत्तमम् । अस्य सिद्धयोऽणिमाद्याः **विभूतिवत्** यत् तथा विभूतीनामपि बुभुत्सया प्रश्नं चक्रे इति वतेरर्थः॥ **वर्णाश्रमादी-**त्यादिशब्दात्साधारणधर्मस्य च **ज्ञानादीना**मित्यादिशब्दाद्भक्तिवैरा ग्यविज्ञानैश्वर्याणां **यमादी**त्यादिशब्दान्नियमादीनां त्रयस्त्रिंशत्सङ्ख्यानाम् । वतिः प्राग्वत् । गुणदोषौ चापवादश्चेति द्वन्द्वैक्यम् । अपवादश्च तयो-रेव । नचैवं प्रश्नद्वैविध्यम् पृथक्प्रयत्नाभावात् । **व्यवस्थिति**र्निर्णयः॥ **क्षेत्रं**=प्रकृतिः । **क्षेत्रज्ञः**=पुरुषस्तयो**र्भेदो**=विशेषः । **क्रिया**=कर्म । **संसृतौ**=संसारे। **अधिष्ठानस्या**धिष्ठातुः। **परस्याः**=पूर्वविलक्षणाया। उत्कृष्टाया इत्यर्थः । भक्तिमात्रस्य पुरैव पृष्टत्वात्पौनरुक्त्यं माभूदिति परविशेषणम्। स्पष्टमन्यत् १३।१४।१५।१६॥ १७ ॥

अथ क्रमात्पादैस्तदुत्तराण्याह—हेयोपादेयेत्यादिषड्भिः ।

**हेयोपादेयनिर्धारः स्वाप्ने सुप्तप्रबुद्धवत् ।**
**मिथः कृष्णकथासक्ताः प्रेम्णैव हरिदासता ॥ १८ ॥**
**स्वसृष्टानुप्रविष्टोऽसौ रजःसम्मिश्रसत्वता ।**
**गुणचिन्ताभयत्यागो भक्तिरव्यभिचारतः ॥ १९ ॥**
**अरूपचिन्तनं रूपैर्ध्यातृध्येयसमानता ।**
**तत्र तत्रोत्कटं सत्वं कर्मत्यागः शनैःशनैः ॥ २० ॥**
**द्वे हेये द्वे उपादेये गुणदोषावभिज्ञिदौ ।**
**कर्माणि ज्ञानभक्त्योर्न सा सा सङ्ख्या प्रकल्पनात् ॥ २१ ॥**
**स्वतः सिद्धः पुमान्नान्यत् मनोगन्त्रभिमान्यजः ।**

**मनःशत्रुजयः सम्यक् प्रतिमादिष्वजार्चनम् ॥ २२ ॥**
**पुमान्प्रकृत्योपगूढो विश्वमूर्त्तीशपूजनम्।**
**पादैर्द्वाविंशतिर्विष्णोरुत्तराण्युद्धवं प्रति ॥ २३ ॥**

**हेयोपादेयनिर्धारः**=सङ्गत्याग उपाय इत्यर्थः। यथा स्वप्नदृष्टेऽर्थे **सुप्तप्रतिबुद्धौ** सक्तासक्तौ एवमात्मनः सङ्गासङ्गौ इत्यर्थः। यथाहि स्वप्नादुत्थितः स्वप्नमध्यवर्त्तिनमात्मानं स्मरन्नपि न तन्मध्यवर्त्तिनं मन्यते। यथा स्वप्नदृष्टस्य मिथ्यात्वाद्‌तन्मध्यवर्त्यपि स्वप्नद्रष्टा भ्रमात्तन्मध्यवर्त्ती भवति। एवं बाधितानुवृत्त्या विद्वान्देहस्थोऽपि न स्वं बद्धं मन्यते। मूढस्तु तत्त्वतो मुक्तोऽपि भ्रमात्स्वं बद्धं मन्यते। तदुक्तम्—

देहस्थोऽपि न देहस्थो विद्वान्स्वप्नाद्यथोत्थितः।
अदेहस्थोऽपि देहस्थः कुमतिः स्वप्नदृग्यथा ॥

**तथा,**

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।
न मुमुक्षुर्न वै मुक्तिरित्येषा परमार्थता ॥ इति।

**कृष्णकथासक्ताः** सन्तः। **हरिदासता**=भक्तिः प्रेम्णैव न तु लिप्सादिना ॥ १८ ॥

स्वसृष्टेष्वनुप्रविष्टः **असौ** ईश्वर एव जीव इत्यर्थः। न रजसा संमिश्रं सत्त्वं यस्य स तथा तद्भावः। सा दोषदर्शनेऽपि विषयासक्तौ हेतुः। संमिश्रमिति संशब्देन रजसः प्राधान्यम्। तेन सत्त्वांशेन दोषं पश्यति रजःप्राबल्याच्च तं तिरस्कृत्य विषयेषु प्रवर्त्तत इत्यर्थः। गुणाश्चित्तं चेत्युभयस्य त्यागे हंससनन्दादिसंवादो हेतुः। **गुणाः**=विषयाः। चित्तस्य तु त्यागो **निग्रहः**। **अव्यभिचारतो भक्तिः** श्रेयःसूत्तमम् ॥ १९ ॥

अरूपस्य वस्तुनो **रूपैरुपायभूतैश्चिन्तनं**=ध्यानयोगः। ध्येयेन वस्तुना सह ध्यातुस्तुल्यत्वं **सिद्धिः**। यथाहि—भूतसूक्ष्मध्यानादणिमा स्यान्महत्तत्त्वध्यानान्महिमेतिदिक्। **तत्र तत्र**=तेषु तेष्विन्द्रियादिषु

यत्सत्त्वाधिक्यं सा विभूतिः। **शनैः शनैः कर्मत्यागो** वर्णाश्रमादिधर्मत्यागः ॥ २० ॥

ज्ञानादिषु यमादिषु च उभयत्र **द्वे हेये द्वे च उपादेये**। तथाहि ज्ञानादिषु तावत्

धर्मो मद्भक्तिकृत्प्रोक्तो ज्ञानं चैकात्म्यदर्शनम्।
गुणेष्वसङ्गो वैराग्यमैश्वर्यं चाणिमादयः ॥

इत्येवंविधा ज्ञानादय उपादेया अन्यथा तु हेया इत्यर्थः। यमादिषु च—

यमो मन्निष्ठता बुद्धेर्दम इन्द्रियनिग्रहः।
तितिक्षा दुःखसंमर्षो जिह्वोपस्थजयो धृतिः ॥

इत्येवंविधा यमादय उपादेया अन्यथा तु हेयाः। एवमन्येषु। अत्र चोत्तरद्वयार्थ एकेनैव पादेन सङ्गृहीतः। उत्तरत्रैकस्यैवोत्तरस्यार्थः पादद्वयेनेति न द्वाविंशतित्वहानिः। अयं गुणोऽयं दोष इति भेदज्ञानं **दोषः**। एतद्विभागराहित्येन यदभेदज्ञानं स **गुणः**। "गुणदोषदृशिर्दोषो गुणस्तूभयवर्जित" इत्युक्तत्वात्। गुणदोषयोरपवादमाह—**कर्मणीति**। तौ गुणदोषौ **कर्मणि** स्तः न तु **ज्ञानभक्त्योः**। तत्र हि सर्वस्य ब्रह्मभावादभिन्नत्वम्। यथोक्तम्—

ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ इति।

अन्यस्मिन्कर्मणि भेदरूपत्वाद्दोषः। **ज्ञानम**परोक्षबोधः। **भक्ति**रिहोत्तमा।

सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥

इत्यत्रोक्ता। अनयोस्तु प्रत्येकमेकात्मरूपत्वेन भेदाभावान्न तावद्दोषः। अत एव भेदप्रतियोगिकाभेदाभावान्न गुणोऽपि। एतदेवोक्तं मूलश्लोकेन—

न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः।
साधूनां समचित्तानां बुद्धेः परमुपेयुषाम् ॥ इति।

गुणदोषयोरुद्भवो येभ्यः गुणेभ्यस्ते चेति पूर्वार्धे । बुद्धेः परमुपेयुषामिति ज्ञानिनामित्यर्थः ॥ **सा सा** तेषु तेषु मतेषु प्रसिद्धा षड्विंशतिपञ्चविंशतिप्रमुखा तत्त्वसङ्ख्या । **प्रकल्पनात्** वादिनां स्फूर्तिवैचित्र्याद्वस्तुतस्त्वेकमेव तत्त्वमितिभावः ॥ २१ ॥ **पुमान्**=क्षेत्रज्ञः । **स्वतः सिद्धः**=स्वप्रकाशः । **अन्यत्**=क्षेत्रं न स्वतः सिद्धम् । तद्धि जडत्वादन्यतः प्रकाशते । "परस्परं सिध्यति यः स्वतः स्व" इत्युक्तम् । अयं क्षेत्रक्षेत्रज्ञयोर्भेद इत्यर्थः । मनः प्रति गच्छतीति **मनोगन्ता** मनसि स्थित इत्यर्थः । तस्मिन्मनःकल्पितेऽर्थेऽभिमानी **अजो** देहयोगावियोगहेतुर्वस्तुतः स्वयमजोऽपि मनोधर्मेष्वभिमानाज्जन्ममृत्युमानिवेत्यर्थः । मन एव शत्रुस्तस्य **जयो** निग्रहः सोऽभिमाननिवृत्तौ हेतुः । प्रतिमादिष्वित्यादिशब्दात्सलिलसूर्याग्निमन्त्रविप्राः । तेष्वजस्य विष्णोर**र्चनं** क्रियायोगः ॥ २२ ॥ प्रकृतिकामिन्या गाढालिङ्गितः पुमान्संसृतावधिष्ठानम् । स्थिरचरमूर्त्तेरीश्वरस्य पूजनं परा भक्तिः । स्पष्टमन्यत् ॥ २३ ॥

एवं सोत्तरान्प्रश्नानुक्त्वेदानीं चतुर्णां प्रश्नानां प्रभेदाननुवदिष्यन्नाथभेदानाह-**गुरुभिरि**त्यादिसार्द्धेन ।

**गुरुभिः पञ्चविंशत्या लोकतत्त्वपरीक्षणे ।**
**हीनमध्योत्तमैरष्टनवाष्टाभिस्त्रिधैकधा ॥ २४ ॥**
**आत्मतत्त्वपरीक्षायां चतुर्धेत्याद्यमुत्तरम् ।**
**ऋण्यनृण्याश्रमद्वन्द्वभेदेन द्वादशं द्विधा ॥ २५ ॥**
**व्यवस्थेति तथा वेदोऽपीतिपञ्चदशं द्विधा ।**
**भिक्षुगीतस्य साङ्ख्यस्य गुणलक्ष्यैलगीतयोः ॥ २६ ॥**
**उक्त्योक्तं मनसोऽरित्वं बलं भेदो रणे जयः ।**
**ऊनविंशं चतुर्धैव चतुर्भिर्द्वादशोत्तरैः ॥ २७ ॥**
**पञ्चद्वादशभिः षड्भिः षट्त्रयोविंशतिस्ततः ।**

आद्यमुत्तरं चतुर्धा । तत्र पञ्चविंशत्या गुरुभिस्त्रिधा । ते हि लोकतत्त्वपरीक्षायां हीनमध्यमोत्तमत्वात् त्रिविधाः ।

अत एव सप्तमाष्टमनवमेषु अष्टनवाष्टाभिः क्रमादुक्ताः ॥ २४ ॥ आत्मतत्त्वपरीक्षायामेकधा । साचोक्ता **दशमे** । इत्थं 'हेयोपादेयनिर्धार' इत्युक्तं चतुर्धा । द्वादशमुत्तरम्—'कर्मत्यागः शनैः शनैः' इति । तच्च ऋण्यनृणिनोराश्रमयोर्द्वन्द्वयोर्भेदाद्द्विधा । ऋणिनौ ब्रह्मचारिगृहस्थौ । आद्ये ऋषीणामृणं यदपाक्रियतेऽध्ययनेन, द्वितीये देवानां पितॄणां च यदपाक्रियते यागैः प्रजया च । अनृणिनौ यतिवनस्थौ । अत एतदुत्तरं सप्तदशाष्टादशयोरुत्तरम् ॥२५॥ पञ्चदशं(१) **गुणदोषावभिद्विदाविति** । तस्य च गुणदोषौ कर्मण्येव न ज्ञानभक्त्योरिति व्यवस्थाया एकः प्रकारः । यथाचेयमस्माभिरुक्ता व्यवस्था तथा वेदोऽप्येवमेव ब्रूतइति द्वितीयः । अतस्तद्विंशैकविंशयोरुक्तम् । ऊनविंशे मनःशत्रुजयः सम्यगिति । तच्चतुर्धा मनसोऽरित्वादिभेदात् । तत्र **भिक्षुगी**तस्योक्त्या मनसोऽरित्वमुक्तं भिक्षूणां हि मन एव शत्रुरिति समर्थितम् । **सांख्योक्त्या** तद्बलम् । तत्र **महद्**आदिप्रपञ्चजातमुक्तम् । तच्च मनःशत्रोः पराभूतौ सहायभूतत्वाद्बलमित्युक्तम् । मनःसम्बन्धित्वं चास्य तत्कल्पनाविजृम्भितत्वात् । बलं च ज्ञानार्थम् । बलज्ञानपूर्वकं हि शत्रोः पराभिषेणनेन हस्तस्थितो विजयः । गुणलक्ष्योक्त्या तु तस्य भेद उपजापः । सत्त्ववृत्त्या वृत्त्यन्तराणां वशीकारे श्लथमूलो मनःशत्रुः शक्यो जेतुम् । एवं जयसामग्रीं समग्रामुक्त्वा **ऐलगीतो**क्त्या तस्याः फलमुक्तम् । **ऐलः** पुरूरवाः । स हि विचारशरैर्मनःप्रत्यर्थिनं निर्जित्य सुखमासीत् ।

> वैतसेनस्ततोऽप्येवम**ुर्वश्या** लोकनिस्पृहः ।
> मुक्तसङ्गो महीमेतामात्मारामश्चचार ह ॥

इत्युक्तत्वात् । एवमेवेदम् अन्यथेदमाख्यानचतुष्टयमप्रसक्तं स्यात् तदेतत् **आचार्येण** चतुरचेतसोक्तम्—**उक्त्योक्त**मित्यादि । तच्च भेदचतुष्टयं त्रयोविंशादिषु चतुर्षूक्तम् । एवमुक्तरीत्या चतुर्भिरुत्तरै**र्द्वादशाध्याः द्वादशभि**रुत्तरैः **पञ्चाध्यायाः षड्भिः** षडित्येवं पूर्वोक्तै**र्द्वादशभिस्त्रयोविंशति**रध्यायाः स्युः ॥ २६ ॥ २७ ॥

---

(१) उत्तरमितिशेषः ।

ननु त्रयोविंशतावध्यायेषु प्रत्येकमेकैक एव प्रश्न इत्येव किं न कृतं, किं वैषम्येणेति तत्राह—

**निःसङ्गत्वे गुणत्यागे भक्तिदार्ढ्येऽपकर्मणि ॥ २८ ॥**
**तत्त्वज्ञाने चोपयोगात्त्रिद्विद्विद्वित्रिमेलनम् ।**

**निःसङ्गत्व** इति । निःसङ्गत्व उपयोगात्त्रयाणां सत्सङ्गासङ्गसाधुभक्तिप्रश्नानामेकत्र मेलनं कृतम् । गुणत्यागे उपयोगाद् द्वयोर्विषयाशक्तिहंससनन्दादिसंवादप्रश्नयोः, भक्तिदार्ढ्ये उपयोगाद् द्वयोरुत्तमश्रेयोध्यानयोगप्रश्नयोः, **अपकर्मणि** नैष्कर्म्ये उपयोगाद् द्वयोर्ज्ञानादिनियमादिप्रश्नयोः, **तत्त्वज्ञाने** उपयोगात्त्रयाणां तत्त्वसङ्ख्याक्षेत्रक्षेत्रज्ञभेददेहयोगवियोगप्रश्नानाम् । यथा चैतत्तथा प्रश्नार्थपर्यालोचनया ज्ञेयम्॥२९॥

एवमुत्तरभेदान् विविच्य यस्माद्गुरोर्यत् शिक्षितव्यं तदाह—**तद्धेतुष्वि**त्यादिचतुर्भिः ।

**तद्धेतुष्वपि निष्कम्पो निःसङ्गोऽच्छेदलेपकः ॥ २९ ॥**
**विशोधको मलत्यागी त्यक्तो विक्रिययाऽभिदः ॥ ३० ॥**
**निःस्नेहो दिष्टभुग्लोभहीनो रूपाप्रलोभितः ।**
**सारग्राह्यस्पर्शमूढो निर्लोभो गीत्यवञ्चितः ॥ ३१ ॥**
**रसामूढो विमुक्ताशो परिग्राह्यभिमानमुक् ।**
**एक एकमना गुप्तसिद्धौका धृतनिश्चयः ॥ ३२ ॥**

अत्र पञ्चविंशतेः प्रथमान्तानां पुरुषः क्रियते गुरुभिः क्रमादित्यनेन सहान्वयः । **तद्धेतुषु** कम्पहेतुषु सत्स्वपि पुरुषो निष्कम्पः पृथिव्यादिगुरुणा क्रियते, सा हि भूतैराक्रम्यमाणापि न कम्पते १ । **निःसङ्गो वायुना** । यथाहि वायुः सर्वत्र सञ्चरन्नपि न सज्जति । तथा योगी विषयान्भुञ्जानो न सज्जेदित्यर्थः २ । **अच्छेदलेपको नभसा** । यथा नभः स्थिरचरैर्भावैः सङ्गतमपि न वस्तुतो विच्छिद्यते । यथा च मेघाद्यैर्न स्पृश्यते । एवमात्मन्यविच्छेदमलेपकत्वं च पश्येदित्यर्थः ३ । **विशोधकोऽद्भिः** । यथा स्वच्छस्निग्धमधुरत्वैरापः कीर्त्तनोपस्पर्शनेक्षणमात्रात्पुन-

न्ति तथा मुनिः पुनीयात् ४ । **मलत्यागी अग्निना,** यथा तेजस्वित्वादिगुणैरग्निः सर्वभक्षोऽपि न मलमादत्ते । तथा मुनिर्हविष्यं भुञ्जानोऽपि ज्ञानबलान्न दोषैर्युज्येत ५। **त्यक्तो विक्रियया चन्द्रमसा** । स हि यथा कलानां ह्रासवृद्ध्यादिभिर्न विक्रियते तथा निषेकादिश्मशानान्तैर्देहसंस्कारैर्मुनिर्न विकुर्वीत ६ **आभिदो भेदशून्यो** रविणा । स यथोपाधिवशाद्भिन्न इव, न वस्तुतो भिन्नस्तथात्मेत्यर्थः ७ ॥ ३० ॥ **निःस्नेहः कपोतेन** । स हि स्नेहप्रसङ्गान्नष्टस्तथा स्वयं न भवेदिति व्यतिरेकेण दृष्टान्तः ८ । **एतेऽष्टौ** हीनाः । **दिष्टभुक् अजगरेण,** स यथा दैवलब्धं भुङ्क्ते न तु स्वयं यतते तथा मुनिः स्यादित्यर्थः ९ । **क्षोभहीनः सिंधुना,** स यथा सरिज्जलैः सङ्गासङ्गेऽपि न क्षुभ्यति तथा कामानां लाभालाभैर्मुनिः स्यादित्यर्थः १० । **रूपाप्रलोभितः पतङ्गेन,** स यथा दीपरूपलोभान्नश्यति तथा कामिन्यादिरूपालोकान्मुनिर्नश्यति तस्मात्तथा न स्यात् । ११ । **सारग्राही भ्रमरेण** । स यथा पुष्पेभ्यः सारमादत्ते तथा सर्वशास्त्रेभ्यो मुनिराददीत १२ । **अस्पर्शमूढो गजेन,** स यथा करिण्यङ्गसंस्पर्शमूढो गजान्तरैर्हन्यते, तथा स्त्रीस्पर्शाज्जारैर्मुनिस्तस्मात्तथा न स्यात् १३ । **निर्लोभो मधुघ्ना।** स यथा मधुलोभात्सरघां निरस्य मधु स्वयमादत्ते तथार्थलुब्धं मामपि कश्चिन्निरसिष्यतीति विचार्य मुनिर्निर्लोभो भवेत् १४ । **गीत्यवाञ्चितो हरिणेन,** स हि गीतप्रसङ्गान्नष्टः तेन मुनिर्गीतं न शृणुयात् १५ ॥३१॥**रसामूढो मत्स्येन** । स यथा बडिशरसावेशान्नष्टः तथा रसेषु मुनिर्न मुह्येत् १६ **विमुक्ताशः पिङ्गलया** । सा हि सकलकामुकाशां विमुच्य निर्विण्णा भूता तथा स्वयं स्यात् १७ एते नव मध्यमाः । **अपरिग्राही कुररेण** । स हि सामिषः कुररान्तरैराहन्यमान आमिषं त्यक्त्वा निर्भयोऽभूत् तेन **मुनिर्निरामिषः** स्यात् । निर्लोभ इत्यत्र सञ्चयनिषेधः अत्र तु सञ्चितत्याग इत्यपौनरुक्त्यम् १८ । **अभिमानमुक् अर्भकेण** । स यथाऽभिमानाभावात् सुखी तथा मुनिः स्यात् १९ । **एकः कुमारीकङ्कणेन** । तद्धि वलयान्तरसङ्गाद्वाचालमित्येकमेवावशेषितं

निश्चलमासीत् २० एकमनाः शरकृता। यथा शरकृच्छरदत्तचित्तो भेरीघोषैरन्तिके व्रजन्तमपि नृपतिं न वेद । तद्वन्मुनिर्ब्रह्मणि दत्तचित्तो द्वैतं न वेद तस्मात्तथा स्यादित्यर्थः २१ गुप्तसिद्धौकाः सर्पेण। गुप्तं सिद्धं चौको गृहं यस्य स तथा। यथा सर्पो गृहाण्यनारभमाणः परवेश्मस्वेव सुखमास्ते, तथा स्वयं स्यात् ॥ २२ ॥ ३२ ॥

ईशस्यैकस्य कर्तृत्वे ध्यातुर्ध्येयात्मना स्थितौ ।
देहास्वत्वे च पुरुषः क्रियते गुरुभिः क्रमात् ॥ ३३ ॥

ईश्वरस्यैकस्य कर्तृत्वे धृतनिश्चय ऊर्णनाभिना । स यथा स्वस्मादूर्णामाकृष्य बहिर्वितत्य कञ्चित्कालं क्रीडति पुनस्तां ग्रसते एवमेक एवेश्वरः स्वमाययैवं चेष्टते नान्य इति धृतनिश्चयः स्वयं स्यात् २३

ध्यातुर्ध्येयात्मना स्थितौ धृतनिश्चयः सुपेशकृता। यथा पेशकृता कीटः स्वकुड्यां प्रवेशितस्तद्ध्यानात् पूर्वरूपत्यागेनैव तत्स्वरूपः स्यात्। तथा कामादिभिरुपायैर्भगवद्ध्यानाद्ध्याता ताद्रूप्यं यातीति धृतनिश्चयः स्वयं स्यात् २४। देहास्वत्वे च धृतनिश्चयः देहेन। देहे अस्वत्वमनात्मीयत्वबुद्धिस्तस्मिन् । देहोऽपि जन्ममृत्युयोगात्स्वस्मिन्ननात्मीयत्वं बोधयति २५। एते चाष्टावुत्तमाः ॥ ३३ ॥

तानेव गुरूनाह पृथिवीत्यादिना ।

पृथिवी वायुराकाशमापोऽग्निश्चन्द्रमा रविः ।
कपोतोऽजगरः सिन्धुः पतङ्गो मधुकृद्गजः ॥ ३४ ॥
मधुहा हरिणो मीनः पिङ्गला कुररोऽर्भकः ।
कुमारी शरकृत्सर्प ऊर्णनाभिः सुपेशकृत् ॥ ३५ ॥

सुपेशं शोभनं रूपं करोतीति सुपेशकृत्। पेशकारी कीटः ॥३४॥३५॥

एते मे गुरवो राजंश्चतुर्विंशतिराश्रिताः ।
उपायत्वेऽन्तरङ्गास्ते क्रमात्त्रिस्कन्धता ततः ॥ ३६ ॥

उपायत्वे सङ्गत्यागस्य क्रमादन्तरङ्गाः। अत एव हीनमध्यमोत्तमत्वेन क्रमात्त्रिस्कन्धता तेषाम् ॥ ३६ ॥

देहस्य पृथगुद्देशः श्रैष्ठ्यान्नोदिष्टताकृतात् ॥ ३७ ॥

ननु देहश्चेद्गुरुः किमेष्वेव नोद्दिष्टः ? तन्न देहस्य पृथगुद्देशः कृतः श्रेष्ठत्वात् । श्रेष्ठत्वं चास्य नेदिष्ठतयातिसामीप्येन कृतम् । इतरे विप्रकृष्टा अयं तु सन्निकृष्ट इति भावः । गुरुसन्निकर्षश्च शिष्याणामुपयुज्यते ॥ ३७ ॥

ननु सर्वे प्रश्नाः स्वोत्तरैः सह समानाधिकरणाः । द्वितीयैकोनविंशौ तु भिन्नाधिकरणावित्यत्र को हेतुस्तत्राह—

**स्वोत्तरात्पृथगुद्दिष्टौ द्वितीयैकोनविंशकौ ।**
**प्रागुत्तरेणापि योगमिह बोधयितुं तयोः ॥ ३८ ॥**

**स्वोत्तरादिति** । द्वितीयः सत्सङ्गासङ्गप्रश्नः **एकोनविंशोऽ**भिमानानिवृत्तिप्रश्नः, एतौ **स्वोत्तरा**न्निजादुत्तरात् **पृथ**ग्भिन्ने ऽध्याये कृतौ किमर्थम् ? **प्रागुत्तरेणापि** पूर्वाध्यायदत्तेनोत्तरेणापि **योगं** सम्बन्धं बोधयितुम् ॥ ३८ ॥

किञ्च—

**प्रथमः पञ्चमः षष्ठो दशमोऽथ त्रयोदशः ।**
**एकविंश इति प्रश्नाः षडुत्थापनपूर्वकाः ॥ ३९ ॥**

**प्रथम** इत्यादि । अन्ये प्रश्ना **उद्धवेन** स्वबुद्ध्यैव कृताः प्रथमादयस्तु षट् **उत्थापनपूर्वकाः** । "त्वं तु सर्वं परित्यज्य" इत्यादिवाक्यैर्भगवतोद्धवस्याकाङ्क्षामुत्थाप्य कारिताः ॥ ३० ॥

अथैषां द्वाविंशतिप्रश्नानां सङ्गतिमाह—

**निःसङ्गता कथं कीदृक् तन्निर्वाहश्च यैर्यथा ।**
**भक्तेर्यो विषयस्तस्मिन्सत्यन्यस्मिन् रतिः कथम् ॥ ४० ॥**
**सा कथं भक्तितुल्यं किं कथं भक्तिर्गुणोज्झिते ।**
**यैर्यैः कामार्थधर्मेषु यैर्मोक्षेऽन्तर्बहिर्भवैः ॥ ४१ ॥**
**ते कीदृशाः श्रुतिर्भक्तिपरा च स्मृतयः कथम् ।**
**कीदृग्भक्तः कथं दौस्थ्यमभिमानक्षयः कथम् ॥ ४२ ॥**

**निःसङ्गेत्यादिचतुर्भिः** । निःसङ्गता कथमित्येवमर्थं **प्रथमः प्रश्नः** । सा च कीदृशीति **द्वितीयः** । तस्य निर्वाहश्च यैः स्यात्ते के

इति **तृतीयः**। यया चानुष्ठितया तन्निर्वाहः सा केति **चतुर्थः**। यश्च भक्तेर्विषय ईश्वराख्यस्तस्मिन्नेव सति सद्रूपक्षेत्रज्ञे जीवे सति प्राणिनामन्यस्मिन्नेव वस्तुनि रतिः कथमिति **पञ्चमषष्ठौ**। ईश्वरस्यैव शरीरावच्छेदाज्जीवत्वम् अत एव स्वसृष्टानुप्राविष्टोऽसावित्युपक्रमः। अतस्तत्रैव क्षेत्रज्ञरूपे रतिरित्युक्तम्। तदुक्तम्—

भगवान् ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया।
तदध्यवस्यत्कूटस्थो रतिरात्मन्यतो भवेत्॥ इति।

**कूटस्थः** क्षेत्रज्ञो न हारिरित्याद्युक्तं **टीकायाम्**। सा रतिः कथमिति **सप्तमः**। गुणचित्तत्यागात् क्षेत्रज्ञे रतिरित्यर्थः।

भक्तितुल्यमपरं किमित्य**ष्टमः**। भक्तिरेव भक्तितुल्या नान्यदिति भावः। निर्गुणे वस्तुनि कथं भक्तिः कार्येति **नवमः**। साकारद्वारेणेति भावः। कामार्थधर्मेषु मध्ये यैर्यैरुपायैर्निर्गुणे **भक्तिः**स्यात्ते के इति **दशमैकादशद्वादशाः**। तत्र **कामाः** सिद्धयः काम्यन्त इति व्युत्पत्त्या। तासु भक्तिहेतवस्ता याः "तासामष्टौ मत्प्रधाना" इत्यनेनोक्ताः **अर्था** विभूतयः ता अपि भक्तिहेतवः।

केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया।

इत्युक्तत्वात्। **धर्मोऽपि** भगवत्यर्पितो रतिहेतुः। यैश्च मोक्षेऽन्तरङ्गैर्बहिरङ्गैश्च रतिः स्यात्ते क इति **त्रयोदशचतुर्दशौ**। तत्रान्तरङ्गा ज्ञानादयः बहिरङ्गा यमादयः, आरादुपकारकत्वात्।

श्रुतिर्भक्तिपरा कथमिति **पञ्चदशः**। कर्मणामन्तःकरणशुद्ध्यर्थं विधानादिति भावः। **स्मृतयश्च** कथं भक्तिपरा इति **षोडशः**। स्मृतयोऽक्षपादादिसूत्राणि। ते हि वेदस्थमेव तत्त्वभेदं स्मरन्ति। तत्त्वानां हेयोपादेयविभागेन व्यवस्थापनादेकस्मिन्भगवत्तत्त्वे पर्यवसानमिति स्मृतीनां भक्तिपरत्वम्। भक्तः कीदृश इति **सप्तदशः**, प्रकृत्युपेतः पुमानित्यर्थः। अस्य च दौस्थ्यं जन्ममृत्युभयं कथमित्य**ष्टादशः**। मनोधर्मेष्वभिमानादित्यर्थः। अभिमानक्षयः कथमित्ये**कोनविंशः**। शत्रोर्जयात् क्षय इत्यर्थः॥ ४० ॥ ४१ ॥ ४२ ॥

किं कर्मज्ञानभक्तीनां सूचितानां पुनः पुनः ।
सर्वोपदेशसाराणां स्वरूपमिति सङ्गतिः ॥ ४३ ॥

इति श्रीभागवते हरिलीलायामेकादशः स्कन्धः ॥

---

कर्मज्ञानभक्तीनां बहुधोक्तानां सर्वश्रेष्ठानां स्वरूपं किमिति **विंशा-द्यध्यायः** । तत्र ज्ञानप्रकृत्यधिष्ठितेन पुंसा विश्वमधिष्ठितमिति । इतरे प्रसिद्धे ॥ ४३ ॥

इति श्रीमधुसूदनसरस्वतीविरचितायां हरिलीलाव्याख्यायामेकादशः स्कन्धः समाप्तः ॥

---

एवं तृतीयादिषु सर्गादीन्नव प्रभेदानुक्त्वा क्रमादाश्रयो **द्वादश** उच्यत इत्याह—

**आश्रयो द्वादशस्कन्धे त्रयोदशभिरीरितः ।**
**आश्रयश्च परं ब्रह्म परमात्मा रमापतिः ॥ १ ॥**

**आश्रय** इति । आश्रयलक्षणमाह **आश्रयश्चेति** । निर्गुणं पर **ब्रह्म** त्रिगुणः **परमात्मा** सत्त्वगुणो **रमापतिः** । ब्रह्मादिशब्दवाच्यं यद्वस्तु स आश्रय इत्यर्थः । एकमेव हि तत्त्वं त्रिभिः शब्दैरुच्यते । यदुक्तम्—

वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् ।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ।

एतच्च तथैव टीकायां व्याख्यातम् । साकारनिराकारयोरप्याकारतिरोहितत्वान्न भेद इत्यर्थः ॥ १ ॥

नन्वद्वये वस्तुनि आश्रयशब्दप्रवृत्तौ किं निमित्तमिति तत्राह—

**यतः प्रपञ्चधीस्तत्र सर्पे स्रग्धीरिवाश्रिता ।**
**उपादेयानुपादेयावाश्रयाश्रयिणौ च तौ ॥ २ ॥**

**यत** इति । यतो यस्मादनिर्वाच्यप्रपञ्चधीस्तस्मिन् ब्रह्मण्यधिष्ठानो

आश्रिताऽध्यस्ता । यथा सर्पे स्रग्बुद्धिः । प्रतीतिव्यतिरेकेण प्रपञ्चस्याभावाद्धीरित्युक्तम् ।

यदुक्तम्—

आभासश्च निरोधश्च यतश्चाध्यवसीयते ।
स आश्रयः परं ब्रह्म परमात्मेति शब्द्यते ॥ इति ।

आश्रय उपादेयः । आश्रयी प्रपञ्चो हेयः । अतोऽत्र प्रकरणद्वयमित्यर्थः ॥ २ ॥

तत्रादौ हेयमाह—

**अतश्चतुर्भिरध्यायैरनुपादेयतोदिता ।**
**उत्तरोत्तरदुस्थत्वात्स्थापकानां स्थितेरपि ॥ ३ ॥**

**अत** इति । अध्यायार्थानाह—**उत्तरोत्तरे**त्यादि । **स्थापकानां** राज्ञामुत्तरोत्तरदौर्बल्यं **प्रथमे** । **स्थिते**रायुर्बलादिरूपाया **द्वितीये** ॥ ३ ॥

**युगेयुगेऽन्यथाभावात्कालग्रस्ततया तथा ।**
**उपादेयत्वमेकेन परीक्षित्फलदर्शनात् ॥ ४ ॥**

प्रतियुगमन्यथाभावस्**तृतीये** । कालग्रस्तत्वं **चतुर्थे** । तच्च निरोधत्रयक्रमाक्रान्तत्वात् । एभिरेव हेतुभिः प्रपञ्चस्यानुपादेयत्वम् । **परीक्षितः फलस्य** ब्रह्मसायुज्यरूपस्य **दर्शना**दाश्रयस्योपादेयत्वम् । अयं **पञ्चमार्थः** ४

अथाश्रयप्राप्तावुपायमाह—

**श्रवणं मननं ध्यानं चेत्युपादानहेतवः ।**
**तत्र श्रवणसिद्ध्यर्थं द्वाभ्यां शब्दस्य सम्भवः ॥ ५ ॥**

**श्रवण**मिति । श्रवणादयो हि तत्त्वसाक्षात्कारं जनयन्ति । लक्षणं तु एषां प्रागुक्तम् । तत्र श्रवणमाह—**तत्रे**ति । "श्रोतव्यः **श्रुति**वाक्येभ्य" इत्युक्तत्वात् । श्रवणं **वेदशब्द**सापेक्षम् ॥ ५ ॥

**वेदोपवेदभिन्नस्य मार्कण्डेयकथा त्रिभिः ।**
**विष्णुमायाशिवेक्षाभिर्भिन्ना मननसिद्धये ॥ ६ ॥**

तत्र वेदसम्भवः **षष्ठे** । उपवेदः पुराणं तत्सम्भवः **सप्तमे** । मननमाह—**मार्कण्डे**येति । तत्राष्टमे **मार्कण्डेयस्य** विष्णुवीक्षा **नवमे**

मायेक्षा, **दशमे** शिवेक्षा । अयमर्थः यथा **मार्कण्डेयस्य** प्रथमं **हरेर्दर्शनम्**, ततो **मायायाः** ततः **शिवस्येति** वृत्तम् , तथा मननं कुर्वतोऽपि प्रथमं परोक्षत्वाधिगमः । पुनरसम्भावनाविपरीतभावनाभ्यां तत्रैव भ्रमः । ततो मननदार्ढ्येन तन्निरासे पुनरपरोक्षत्वाधिगम इति । सुहृदयाश्चेह प्रमाणम् ॥ ६ ॥

ध्यानमाह—

**मूर्त्तेस्तत्त्वं सूर्यगत्वमेकेन ज्ञानसिद्धये ।**
**पुराणार्थोपसंहार एकेनैकेन तद्विदा ॥ ७ ॥**

**मूर्त्तेरिति** । **एकादशे** भगवन्मूर्त्तेस्तत्त्वं **सूर्यमण्डला**-धिष्ठातृत्वं च ध्यानार्थमुक्तम् । **द्वादशे** भागवतार्थोपसंहारः । **त्रयोदशे** पुराणानां ब्राह्मादीनां भेदाः ॥ ७ ॥

एवमाश्रयं विविच्य सर्वस्कन्धेष्वध्यायान् गणयति—

**अष्टादश दश त्रिंशत् त्र्यधिका नवविंशतिः ।**
**षड्विंशतिर्दश नवपञ्चभिर्विंशतिस्त्रिभिः ॥ ८ ॥**
**चतुर्भिश्चाथ नवतिरेकात्रिंशत्त्रयोदश ।**
**इति भागवतेऽध्याया एकत्रिंशच्छतत्रयम् ॥ ९ ॥**

**अष्टादशेत्यादि** । दश नवपञ्चभिः सहिता एकोनविंशतिः एवं पञ्चदश चेत्यर्थः । चतुर्भिश्च विंशतिः चतुर्विंशतिरित्यर्थः ॥

**सर्वसङ्ख्यामाह—इतीति** । एकात्रिंशदधिका यस्मिन् शतत्रये तत्तथा । स्पष्टमन्यत् ॥ ८ ॥ ९ ॥

अत्रैव स्वानुभूतमभ्यासक्रममाह—

**एकादिनियमेनैतानभ्यसेच्छक्तितोऽन्वहम् ।**
**वक्ता श्रोतर्य्यप्यश्रोता वक्तर्य्यन्यत्र चिन्तकः ॥ १० ॥**

**एकादीति** । किञ्च । अन्यस्मिन् **श्रोतरि** उपस्थिते **वक्ता** भवेत् । स्वाधिके च **वक्तरि** उपस्थितेऽभिमानं त्यक्त्वा स्वयं **श्रोता** भवेत् । उभयाभावे स्वयमेव शास्त्रार्थं चिन्तयेत् इत्येषाभ्यासक्रिया । एतच्च "शृण्वन्ति गायन्ति गृणन्ति साधव" इत्यत्र स्पष्टीकृतमाचार्येण ॥१०॥

**शास्त्रे स्कन्धे प्रकरणेऽध्याये वाक्ये पदेऽक्षरे ।**
**गुरूपदिष्टो योऽर्थस्तं विमृशन्विष्णुतत्परः ॥ ११ ॥**

गुरूपदिष्टमर्थं शास्त्रादिष्वनुसन्दधानः पुमान् **विष्णुतत्परः** स्यात् तत्र शास्त्रादीनां चतुर्णामर्थं इहैवोक्तः । वाक्यपदाक्षराणां तु टीकायाम् । एवं सर्वेषामेकवाक्यतां पश्यन् **विष्णु**सायुज्यमेतीत्यर्थः । **अक्षरं** पदावयवः प्रकृत्यादिरूपः ॥ ११ ॥

विष्णुतत्पर इत्युक्तम् । तच्चायुक्तं जीवानामत्यन्तभिन्नत्वेन **विष्णु**सायुज्यानुपपत्तेस्तत्राह—

**एकं तेजस्त्रिधा यद्वत्सूर्यमण्डलरश्मिभिः ।**
**एकं ब्रह्म तथा तद्वद्विष्णुमायात्मभिर्मतम् ॥ १२ ॥**

**एकमिति** । अयमर्थः । यथैकमेवाविशेषितं ज्योतिरुपाधिवशात्सूर्यादिभेदेन त्रिधा, तथैकमेव **ब्रह्म विष्णवादि**भेदेन । तत्रानवच्छिन्नं चैतन्यं **विष्णुः, मायेति** मायावच्छिन्न ईश्वरः, मायातद्वतोरभेदोपचारान्मायेत्युक्तम् । अविद्यावच्छिन्नमात्मा ।

यदाहुः—

कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ।
कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते ॥ इति ।

इत्थमेवेदं व्याख्येयम् । यथाश्रुते तु मायाया जडत्वान्निर्वाच्यत्वबाध्यत्वादिदोषैर्ब्रह्मत्वानुपपत्तिः । जीवेश्वरयोः प्रतियोगित्वादनवच्छिन्नस्य **तृतीयत्वम्** । घटाकाशमठाकाशयोः प्रतियोगित्वादिवत् महाकाशस्य । **सूर्य**दृष्टान्तस्तु त्रित्वमात्र एव न तु साकारत्वे ॥ **१२** ॥

ननु तर्हि जीवानां कथमनेकत्वं तत्राह—

**मण्डलान्निर्गते सूर्येऽनेकत्वं रश्मिता यथा ।**
**मायाया निर्गते विष्णौ तथाऽनेकत्वमात्मता ॥ १३ ॥**

**मण्डलादिति** । मण्डलान्निर्गते तेजोद्वारा बहिःप्रसृते सति यदनेकत्वं सा यथा रश्मिता । एवं मायाया इति मायोपाधेरीश्वरस्य सकाशाद्विष्णौ निर्विशेषे चैतन्ये निर्गतेऽविद्याप्रदेशेषु फलिते सति यदनेकत्वं तदात्मता । मायायां पतितं निर्विशेषचैतन्यस्य महत्प्रतिबिंब**मीश्वरशब्दा**-

र्थः । ततो बिम्बावच्छेदेन पतितानि सहस्रशः प्रतिबिम्बानि जीवशब्दार्थ इति ॥ १३ ॥

ननु जीवानां विष्ण्वंशत्वेऽपि विष्णुज्ञानं नोपपद्यते कर्मकर्तृभावविरोधादिति ।तत्राह—

**यथा नयनसम्बन्धाद्द्रष्टारो रश्मयो रवेः ।**
**तथा ज्ञातार आत्मानो देहसम्बन्धतो हरेः ॥ १४ ॥**

**यथेति** । यथा **रवेरेव** रश्मयश्चक्षुषि संरम्य रविं पश्यन्ति । तथा देहसम्बन्धादात्मानो विष्णुमित्यर्थः ॥ १४ ॥

एवं जीवानां रविदृष्टान्तात्सर्वथा तत्साम्ये प्राप्ते वैलक्षण्यमाह—

**विशेषस्तु यथात्मानश्चेतनत्वादुपासते ।**
**विष्णुं मायान्तरप्राप्तदुरवस्थानिवृत्तये ॥ १५ ॥**

**विशेषस्त्विति** । अयं रश्मितो जीवानां विशेषः । यच्चेतनत्वाद्विष्णुमुपासते । किमर्थम् । मायान्तरेण जीवेश्वरयोर्व्यवधानेन या प्राप्ता दुरवस्था जन्मादिरूपा तन्निवृत्त्यर्थम् ॥ १५ ॥

**उपासत** इत्युक्तम् । तत्रोपायानाह—

**उपासनं कर्मभक्तिज्ञानयोगैस्त्रिधा क्रमात् ।**
**येषां धीर्विषयेऽदोषा सदोषा नैव तैः कृतम् ॥ १६ ॥**

**उपासनमिति** । तेषु क्रमादधिकारिणमाह—**येषामिति** । येषां धीर्विषयेऽ**दोषा** दोषशून्या तैः कर्मयोगेन भगवदुपासनं कृतम् । येषां **सदोषा** विषयेषु दुष्टज्ञानमास्ते न तु तेषां त्याग इति सदोषत्वं तैर्भक्तियोगेन । येषां तु **नैव** विषयेषु धीर्नास्त्येव तैर्ज्ञानयोगेनेति । तदुक्तम्—

निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु ।
तेषु निर्विण्णचित्तानां कर्मयोगस्तु कामिनाम् ॥
यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् ।
न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धये ॥ इति ॥ १६ ॥

अथैषामुपायानां क्रमाल्लक्षणमाह—

**कर्मणामर्पणं विष्णौ विष्णोर्वार्ता परस्परम् ।**
**विजने चिन्तनं विष्णोर्योगानां लक्षणं क्रमात् ॥ १७ ॥**
**इति भागवतस्यानुक्रमणी रमणाकृता ।**

विदुषा वोपदेवेन विद्वत्केशवसूनुना ॥ १८ ॥

कर्मणामिति । स्पष्टम् ॥ १७ ॥ १८ ॥

एवं दशविधामपि हरिलीलां सम्यगनुक्रम्योपसंहरति —

हरिलीलेति नामेयं हरिभक्तैर्विलोक्यताम् ।
अस्या विलोकनादेव हरौ भक्तिर्विवर्द्धते ॥ १९ ॥

इति श्रीभागवते महापुराणे वोपदेवविरचिता
हरिलीलानुक्रमणी समाप्ता ॥

हरिलीलेति । स्पष्टम् ॥ १९ ॥

अतत्त्वे तत्त्वधीर्येषां तत्त्वे चातत्त्वधीर्नृणाम् ।
न तानानन्दयन्त्येता वोपदेवस्य सूक्तयः ॥ १ ॥

यस्य व्याकरणे वरेण्यघटनास्फीताः प्रबन्धा दश
प्रख्याता नव वैद्यकेऽथ तिथिनिर्धारार्थमेकोऽद्भुतः ॥
साहित्ये त्रय एव भागवततत्त्वोक्तौ त्रयस्तस्य च
भूगीर्वाणशिरोमणेरिह गुणाः के के न लोकोत्तराः ॥ २ ॥

लक्ष्म्या सुवर्णलतया वपुषि प्रकाण्डे
श्लिष्टः स्तनस्तबकभूषितया नितान्तम् ।
(१)तच्छायकासितरुचिः फलितस्तमाल—
स्तापं व्यपोहतु भवार्कभवं हरिर्नः ॥ ३ ॥

हरिलीलाविवेकोऽयं कामराजस्य वेश्मनि ।
कटके रचयाञ्चक्रे तुष्ट्यै हेमाद्रिणा सताम् ॥ ४ ॥

सरस्वती श्रीमधुसूदनेन निर्व्यूढमेतद्बुधमोदनेन ॥
जनः समस्तोऽपि रसादनेन(२) व्रजेशभक्तिं व्रजतादनेन ॥५॥

इति श्रीभागवते महापुराणे मधुसूदनसरस्वतीविरचितायां
हरिलीलाटीकायां द्वादशस्कन्धः समाप्तः ।

---

(१) तस्या लक्ष्म्याः छाया कान्तिः तच्छायम् "विभाषा सेनासुराच्छायाशालानिशानाम्"
इति क्लीबता । तेन कासिता दीपिता रुचिः कान्तिर्यस्य सः ।

(२) रसादनेन आनन्दास्वादनेन ।

श्रीगणेशाय नमः ।

# श्रीमद्भागवते-

जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्
तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः ॥
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥१॥

## श्रीमधुसूदनसरस्वतीकृता परमहंसप्रिया ।

श्रीकृष्णं परमं तत्त्वं नत्वा तस्य प्रसादतः ।
श्रीभागवतपद्यानां कश्चिद्भावः प्रकाश्यते ॥ १ ॥

अनुदिनमिदमायुः सर्वदासत्प्रसङ्गै-
र्बहुविधपरितापैः क्षीयते व्यर्थमेव ।
हरिचरितसुधाभिः सिच्यमानं तदेत-
त्क्षणमपि सफलं स्यादित्ययं मे श्रमोऽत्र ॥ २ ॥

कृत्स्नग्रन्थतात्पर्यविषयीभूतमर्थं दर्शयन् भगवान् बादरायणिस्तमेव ध्येयत्वेनोपशिक्षयन्मङ्गलमाचरति-**जन्माद्यस्येति** । तं परं सत्यं धीमहीति सम्बन्धः । **सत्यम्**=अबाध्यम् । तत् किंस्विद्व्यवहारमात्राबाध्यं तद्व्यावर्तनायाह-**परमिति** । परमार्थसत्यमत्यन्ताबाध्यमित्यर्थः । तथा च **श्रुतिः**-"सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्" इति प्राणशब्दोदितानां व्यवहारतः सत्यानामधिष्ठानभूतं परमार्थसत्यमात्मानं दर्शयति । एवं "सत्यं ज्ञानमनन्तं ब्रह्म" "ऐतदात्म्यमिदं सर्वं" "तत्सत्यं स आत्मा तत्त्वमसि" इत्यादि **श्रुतिरपि** ब्रह्मात्मशब्दोदितं परं तत्त्वमबाध्यं दर्शयति । सर्वभ्रमाधिष्ठानत्वात्सर्वबाधावधित्वाच्च परमार्थसत्यम् । न हि निरधिष्ठानो भ्रमोऽस्ति न वा निरवधिर्बाधः । तत्र

सर्वभ्रमाधिष्ठानत्वं **जन्माद्यस्य यत** इत्यादिना दर्शितम्। सर्वबाधावधित्वं च **तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा** इत्यादिना। तं परं सत्यं सर्वाधिष्ठानसन्मात्रमखण्डवाक्यार्थभूतं श्रुत्वा मत्वा च वयं=मुमुक्षवो **ध्यायेम**=निदिध्यासेम। ध्यानमत्र निदिध्यासनरूपमेवाभिप्रेतं न तूपासनम्। **निदिध्यासनं** हि वस्तुस्वरूपापेक्षप्रत्ययानन्तरितशाब्दज्ञानसन्ततिरूपम्। "आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति श्रुत्या "ततस्तु तं पश्यते निष्कलं ध्यायमान" इति श्रुत्या चात्मसाक्षात्कारत्वेन विहितम्। **उपासनं** तु वस्तुस्वरूपानपेक्षं पुरुषेच्छामात्रं तत् मानसक्रियाप्रवाहरूपं यथा-"यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्" इत्यादि। इदं च वस्तुस्वरूपानपेक्षमपि तदविरोधि किञ्चित्तद्विरोध्यपि यथा—"वाचं धेनुमुपासीत" इत्यादि। द्विविधमप्युपासनं श्रुत्या ब्रह्मणि निषिद्धं "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इति। शुद्धगोचराया वृत्तेरुपनिषन्मात्रकरणकत्वात् "तं त्वौपनिषदं" इत्यादिश्रुतेः। तस्या एवावर्त्यमानाया निदिध्यासनरूपत्वाद्युक्तं शुद्धगोचरत्वम्। एतावन्मात्रपर्यवसानाच्च सर्वसाधनविधीनां **धीमहीत्युक्तम्**। एतस्य च मङ्गलत्वं—

सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम्।
येषां हृदिस्थो भगवान् मङ्गलायतनो हरिः॥

इत्यादिशास्त्रसिद्धम्। एवं शुद्धस्य ब्रह्मणो निदिध्यास्यमानस्य परमार्थसत्यतामुपपादयितुं तत्पदार्थस्वरूपतामाह-**जन्माद्यस्य यत** इत्यादिना। **अस्य**=प्रत्यक्षादिसकलप्रमाणसन्निधापितस्य जगतो **जन्मादि**=जन्मस्थितिभङ्गं **यतो** भवतीति **तं सत्यं धीमहीति** सम्बन्धः। तथा च-**श्रुतिः**—"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति" इत्याद्या, "आनन्दो ब्रह्मेति व्यजानात् आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इत्याद्या च जगज्जन्मस्थितिलयकारणतां ब्रह्मणो दर्शयति। **यत** इति प्रकृतौ पञ्चमी। "जनिकर्तुः

प्रकृतिः" [ १।४।२७ ] इति पाणिनिस्मरणात् । **जन्मादी**ति तद्गुणसंविज्ञानो बहुव्रीहिः "सर्वादीनि सर्वनामानि" ( १।१।२७ ) इतिवत् जन्मनश्चादित्वं श्रुतिनिर्देशापेक्षं वस्तुवृत्तापेक्षं च । ननु "असद्वा इदमग्र आसीत्" इति श्रुतेः शून्यमेव जगत्कारणमस्तु, नेत्याह—**अन्वयात्** इति । इदं सदिदं सदिति सद्रूपस्यैव कारणस्य कार्येष्वनुस्यूतत्वात् । **इतरतश्च**=असतोऽनन्वयात् शून्यमिति प्रतीत्यभावात् । "कुतस्तु खलु सोम्यैवं स्यादितिहोवाच कथमसतः सज्जायेत" इति वाक्येनासतः कारणताप्रतिषेधाच्च सद्रूपं ब्रह्मैव जगदुपादानमित्यर्थः । "सदेव सोम्येदमग्र आसीत्" इतिश्रुतिवाक्यान्वयात् **इतरतश्च** "असद्वा इदमग्र आसीत" इत्यसतः सत्तान्वयाच्चेति वा । तथाचासत्यमिदं सूक्ष्मत्वेन गौण्या वृत्त्या सत्ये च योजनीयम् । एतच्च "समाकर्षात्" इति सूत्रेण व्याख्यातम् । **इतरत**श्चेत्यत्र चकारादसतोऽन्वयलाभः । अथवा कार्यान्वयात् ब्रह्म कारणमित्युक्ते कार्यविनाशे तस्य विनाशमाशङ्क्योक्त**मितर-तश्चे**ति । तथाहि—घटनाशेऽपि तदन्विता मृन्न विनश्यति घटभिन्ने शरावादौ तस्या अन्वयात् । एवं सदपि **इतरत** इतरत्र कार्यान्तरे तदुपलभ्यान्वयादित्यर्थः । वाक्यार्थानुपपत्त्यादिदोषाच्च नासतो जगत्कारणतेत्याह—**अर्थेष्वभिज्ञ** इति । न हि सताप्यर्थेनाविदित्वा कश्चिद्रचयितुं शक्यते किं पुनरवस्तुनेति भावः । तथा च श्रुतिः—"यः सर्वज्ञः स सर्वविद् यस्य ज्ञानमयं तपः तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते" इति, "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेय" इत्याद्या चित्स्वरूपसाधनप्रयोजनादिविज्ञानवत एव जगत्कारणत्वं दर्शयति । अभितः सर्वप्रकारेण सामान्यतो विशेषतश्च सर्वं वस्तु जानातीति **अभिज्ञः** । सर्वज्ञः सर्वविदिति पदद्वयार्थो दर्शितः । **अर्थेषु** इति सप्तमी सर्वत्रैकरूपेव वृत्त्या कल्पितत्वरूपा विषयतेति सूचयति । अथवा अन्वयादितरतश्चार्थेषु इति पूर्वेणैव सम्बन्धः । एवं च सर्वज्ञत्वोपादानत्वेन परमाणुकारणवादः प्रधानकारणवादश्च निराकृतः । ननु माभूत्कारणता परमा-

णूनां प्रधानस्य तु भविष्यति सत्त्वपरिणामेन सार्वज्ञ्यसम्भवात् ब्रह्मणश्च नि-
र्धर्मकत्वेन सर्वज्ञानाकर्तृत्वादित्यत आह—**स्वराडिति** । स्वयमेव राजते
प्रकाशत इति स्वराट् अन्यानपेक्षः प्रकाशरूप इत्यर्थः । तथा च सविता
प्रकाशत इत्यादिवत्कर्तृत्वौपचारिकत्वेन सर्वविषयकज्ञानरूपस्य विवक्षित-
त्वान्न प्रधानस्याचेतनस्य कारणताप्रसङ्ग इत्यर्थः । एवं चैकविज्ञानप्रतिज्ञा
समर्थिता भवति अन्यथा प्रधानविज्ञानेन तत्कार्यज्ञानसम्भवेऽपि तदका-
र्याणां पुरुषाणां ज्ञानासम्भवात् ब्रह्मणि विदिते तु पुरुषाणां स्वत एव
तद्रूपत्वात् इतरेषां च तत्र कल्पितत्वेन तदव्यतिरेकात् "येनाश्रुतं श्रुतं
भवत्यमतं मतमविज्ञातं विज्ञातम्" इत्यादिश्रुत्या "कस्मिन्नु भगवन्
विज्ञाते सर्वमिदं विज्ञातं भवति" इत्याद्यया "आत्मनि खल्वरे दृष्टे श्रुते
मते विज्ञाते इदं सर्वं विदितम्" इत्याद्यया च प्रतिपादितैकविज्ञानेन सर्व-
विज्ञानोपपत्तेः । ननु ब्रह्मकारणत्वेऽप्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञा नोपप-
द्यते वेदस्यापौरुषेयत्वेन स्वातन्त्र्याभ्युपगमात् तस्य ब्रह्मकार्यत्वे पौरुषेय-
त्वेनाप्रामाण्यप्रसङ्गात किम्बला ब्रह्मकारणतापि व्यवस्थाप्येत तस्मात्सङ्को-
चितायां प्रतिज्ञायां स्वकार्यापेक्षया प्रज्ञानमपि लब्धप्रसरमित्याशङ्क्याह—
**तेने** इत्यादि । **ब्रह्म**=वेदं **यस्तेने**=विस्तारितवान् श्वासप्रश्वासादि-
वल्लीलया आविर्भावितवान् । तथाच **श्रुतिः**—"अस्य महतो भूतस्य
निश्वसितमेतद्यद् ऋग्वेदो यजुर्वेद" इत्याद्या वेदस्यापि ब्रह्मोपादानतां
दर्शयति । न च ब्रह्मकार्यत्वे सति तस्य पौरुषेयत्वं, पुरुषमात्रजन्यत्वेऽपि
पौरुषेयत्वे वर्णानां नित्यत्वेऽप्यानुपूर्वीविशेषस्य पुरुषजन्यत्वान्मीमांसकम्म-
न्यस्यापि वेदाप्रामाण्यप्रसङ्गः । वर्णनित्यतामात्रेणैवापौरुषेयत्वव्यवस्थापने
लौकिकवाक्यस्यापि तत्प्रसङ्गः । तस्मान्मानान्तरेणार्थमुपलभ्य रचितत्वं
पौरुषेयत्वं सापेक्षलक्षणाप्रामाण्यप्रयोजकं तच्च न वेदे वेदार्थस्य मानागोचर-
त्वात् । इदमेव श्रुत्या निश्वासितदृष्टान्तेन दर्शितम् । यथाहि निश्वासः
पुरुषाज्जायमानोऽपि न पुरुषचिकीर्षाजन्यः सुषुप्तावपि दर्शनात् । एवं
वेदो ब्रह्मणः सकाशाज्जायमानोऽपि न चिकीर्षाजन्यः । तदर्थस्य वेदाति-

रिक्तमानाविषयत्वात् । तथा वेदतदर्थज्ञानयोस्तुल्यकालत्वान्न ब्रह्मणः सार्वज्ञ्यव्याघातो न वा वेदस्य पौरुषेयत्वम् । एवं च सत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञा न सङ्कोचनीया बाधकाभावात् । अत्र चेदमनुमानं सूचितम्=वेदनिष्ठसर्वार्थप्रकाशनशक्तिः सदुपादाननिष्ठा कार्यगतप्रकाशनशक्तित्वात् वह्न्युपादानकदीपगतप्रकाशनशक्तिवदिति । अतो वेदोपादानत्वेनापि ब्रह्मणः सार्वज्ञ्यासिद्धिः । केचित् हिरण्यगर्भ एव वेदप्रवक्ता जगत्कारणं चेत्याहुस्तान्निकरोति—**हृदा य आदिकवय** इति । **आदिकविर्हि** हिरण्यगर्भः तस्मै **हृदा** सह यो **ब्रह्म तेने** अन्तःकरणं सूक्ष्ममहाभूतकार्यमुत्पाद्य तदुपाधेर्हिरण्यगर्भस्य वेदार्थज्ञानं कारितवानित्यर्थः । तथा च **श्रुतिः**—"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" इति हिरण्यगर्भतद्वेदाविर्भावयोः परमेश्वराधीनतां दर्शयति, तदपि हृदा मनसा एव तेने न तु मुखेनाध्यापितवानिति-वा । अनेन सर्वान्तर्यामित्वं दर्शितम् । तथाच **श्रुतिः**—"यः सर्वेषु भूतेषु तिष्ठति सर्वेभ्यो भूतेभ्योऽन्तरो यं सर्वाणि भूतानि न विदुः यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरा यमयत्येष त आत्मान्तर्याम्यमृत" इत्याद्या सर्वान्तर्यामित्वेन परमात्मानं प्रतिपादयति । ननु उदाहृतश्रुतीनां ब्रह्मणि प्रामाण्यं न सम्भवति ब्रह्मणः सिद्धत्वेन मानान्तरायोग्यत्वात् अन्ततः स्वरूपचैतन्यस्यैव मानान्तरत्वात् । तथा च तत्संवादे श्रुतीनां नाज्ञातज्ञापकत्वलक्षणं प्रामाण्यम्, विसंवादे तु बाधितविषयत्वात्सुतरामप्रामाण्यं, तथा च प्रधानपरमाण्वादिकारणताबोधकमनुमानं लब्धावकाशं भविष्यतीत्याह—**मुह्यन्ति यत्सूरय** इति । यत्=यत्र यस्मिन्विषय अखण्डानन्दाद्वये स्वरूपचिन्मात्रलक्षणे **सूरयः**=तार्किकादयो **मुह्यन्ति**=मोहज्ञानमनुभवन्ति । मोहो द्विविधः आवरणरूपो विक्षेपरूपश्च । आवरणरूपोऽप्यसत्त्वावरणरूप अभानावरणरूपश्चेति द्विविधः । नास्ति शुद्धं ब्रह्म न भासते चेति द्विविधोऽपि मोहो वेदान्तशास्त्रविमुखै-

रनुभूयते, वेदान्तशास्त्रविचारपराणां तु परोक्षज्ञानेनासत्त्वावरणनिवृत्तावप्यभानावरणमनुवर्तत एव नास्ति ब्रह्मेतिप्रतीत्यनुदयेऽपि मम न भाति ब्रह्मेति तेषां प्रतीतेः। अत एव ते तदभानावरणनिवर्तकस्य साक्षात्कारस्य साधनान्यनुतिष्ठन्ति। एवं च विक्षेपावरणकार्यं भ्रमविशेषरूपं प्रत्यक्षमेव यतो जीवाद्भिन्न एवेश्वरो जगतो निमित्तकारणमात्रमेवेति **तार्किकवैशेषिकपातञ्जलपाशुपतादयो** व्यवहरन्ति। **साङ्ख्यमीमांसकादयस्तु** जगन्निमित्तकारणत्वेनापि नेश्वरमुपपादयन्ति, किन्तु प्रधानपरमाण्वाद्येव तेन रूपेणोपास्यमित्याहुः। तस्मात् ब्रह्मविषयकमोहस्यापरोक्षत्वात् स्वरूपचैतन्यस्य च तत्साधकत्वेन तदनिवर्तकत्वात्तन्निर्वर्तकवृत्त्युत्पादनेन वेदान्तानां प्रामाण्यमव्याहतमेव। सिद्धत्वेऽपि च ब्रह्मणो मानान्तरायोग्यत्वं रूपादिहीनत्वेन व्युत्पादितं **भाष्यकार**प्रभृतिभिः। एवं पूर्वार्धेन तत्पदवाच्यार्थमुक्त्वा परार्धेन तल्लक्ष्यं वक्तुमारभमाणः "अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते" इतिन्यायेनाह—**तेजोवारीत्यादिना**। **यत्र** ब्रह्मणि त्रयाणां तेजोऽबन्नानां सर्गः **त्रिसर्गः** स **मृषा**=मिथ्यैव शुक्तौ रजतवत्। **छान्दोग्ये** सृष्टिप्रकरणे त्रयाणां तेजोऽबन्नानां साक्षात्पाठितत्वात् **त्रिसर्ग** इत्युक्तम्। वियदधिकरणन्यायेन तु पञ्चभूतसर्ग इति द्रष्टव्यम्। तन्मिथ्यात्वे दृष्टान्तमाह—**तेजोवारिमृदां यथा विनिमय** इति। **विनिमयो** व्यत्ययः व्यत्यासः व्यामिश्रीभावः अन्यस्मिन्नन्यावभासरूप इति यावत्। तथाच **श्रुतिः**—"यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्" इत्यादिना कृत्स्नस्यापि विकारस्यानृततां दर्शयति। न ह्यारम्भवादो वा परिणामवादो वा सम्भवति। तथाहि—परमाणुः परमाण्वन्तरेण संयुज्यमानो द्व्यणुकमारभते इत्यभ्युपेयते। तत्र द्व्यणुकासमवायिकरणभूतः संयोगः परमाण्वोः कार्त्स्न्येन वा समवायादेकदेशेन वा। आद्ये प्रथिमानुपपत्तिः। द्वितीये सावयवत्वापत्तिः। एवं परिणामोऽपि प्रधानस्य

कार्त्स्न्येन तदेकदेशेन वा। आद्ये कारणविनाशापत्तिः। द्वितीये सावयवत्वापत्तिः। न चेष्टमेव तत् सावयवत्वे तस्यापि जन्यत्वेन मूलकारणत्वानुपपत्तिः। एवं कार्यमपि कारणव्यापारात्प्राक् सत् असत् वा। आद्ये कथं कार्यकारणभावग्रहः। न हि खपुष्पेण समं कस्य चित्सम्बन्धो गृह्यते, ननूत्पत्स्यति घट इव प्रतियोगित्वेनासतोऽपि कार्यत्वं भविष्यतीतिचेत्, हन्त प्रागभावप्रतियोगित्वं निराश्रयं साश्रयं वा। आद्ये शशविषाणतुल्यता, द्वितीये सत्कार्यवादापत्तिः। प्रागभावप्रतियोगित्वाश्रयत्वेनैव कार्यसत्त्वाङ्गीकारात्। न च सत्कार्यवादोऽपि घटते कारणव्यापारवैयर्थ्यापत्तेः। आविर्भावतिरोभावयोरपि सदसत्त्वविकल्पग्रासात्। तस्मात्सदसद्विलक्षणत्वेनैवानिर्वचनीयतैव कार्यकारणयोरिति विवर्तवादोऽवशिष्यते। तथाचाविद्यावशाच्छुद्धे ब्रह्मणि द्वैताभासो मिथ्येत्यर्थः। नन्वविद्याकार्याणामसत्यत्वेऽपि अविद्यायाः सत्यत्वमस्तु अनादिभावत्वात् ब्रह्मवत् कल्पकशून्यत्वाच्च। नहि द्वैतप्रपञ्चकल्पनाहेतोरविद्यायाः कल्पकान्तरमस्ति, स्वस्या एव कल्पकत्वे आत्माश्रयत्वात् अविद्यान्तराभ्युपगमे चानवस्थानात्। तथाचैकविज्ञानेन सर्वविज्ञानव्याघात अनिर्मोक्षापत्तिश्चेत्यत आह—**धाम्ना स्वेन सदानिरस्तकुहकमिति**। **सदानिरस्तं**=नित्यनिवृत्तं कुहकं=कपटमविद्याख्यं यस्मिन् तत्तथा। तत्र हेतुः **स्वेन धाम्नेति** अखण्डानन्दाद्वितीयचैतन्यरूपत्वादित्यर्थः। तथाच **श्रुतिः**—"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इत्यादिरन्यथानुपपद्यमानैरेकैवाद्वितीयशब्दैरखण्डमेव वस्तु प्रतिपादयति। दृग्दृश्यसम्बन्धानुपपत्त्या कल्पितत्वेनैवाविद्यायाश्चैतन्यभास्यत्वनियमाच्च। एतस्या एव च स्वपरसाधारणकल्पनामूलत्वान्नाविद्यान्तराभ्युपगमदोषः। उत्पत्त्यनङ्गीकारेण ज्ञप्तेश्च नित्यत्वेन नात्माश्रयदोषः। अनादिभावत्वं चात्मनो नित्यत्वप्रयोजकं न भवति, किन्तु परमार्थसत्यत्वम्। अविद्यायाः सदसद्विलक्षणत्वात् ज्ञाननिवृत्त्योपपत्तिः। तथा च मायातत्कार्यहीनः परमात्मा तत्पदलक्ष्यो दर्शितः। एतेनैव त्वंपदलक्ष्योऽपि दर्शितः। तस्यापि मायातत्कार्यहीनत्वा-

त् जाग्रत्स्वप्नसुषुप्तिसाक्षिणस्तद्वत्त्वाभावात्। एवं च पदार्थज्ञानपूर्वकं वाक्यार्थबोधे सति तदावृत्तिरूपं निदिध्यासनमुपपन्नम्। अत्र **जन्माद्यस्य यत** इत्यनेनानन्दरूपत्वं दर्शितम्। "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इत्यादिश्रुतेः। **अन्वयादि**त्यनेन सद्रूपत्वं नित्यत्वं विभुत्वं च सर्वदेशकालान्वयबोधनात्। **स्वराडि**त्यनेन स्वप्रकाशज्ञानरूपत्वं, **धाम्ना स्वेन सदानिरस्तकुहक**मित्यनेनाद्वितीयत्वं, सत्यमित्यनेन परमार्थत्वमिति "सत्यं ज्ञानमनन्तं ब्रह्म" "विज्ञानमानन्दं ब्रह्म" इत्यादिवाक्यार्थो दर्शितः। अथ च त्वम्पदार्थोऽपि शक्यतेऽनेन श्लोकेन दर्शयितुम्। श्लेषालङ्कारस्यात्यन्तचारुताहेतुत्वात्। तथाहि—**यो** जीवः **अस्य**=देहेन्द्रियादेः जन्मादि विकारजातम् **अन्वयात्**=अनुगतवान् अविद्यायात्मन्यारोपितत्वात्। **तं परं सत्यं धीमहीति** सम्बन्धः। अस्य कीदृशस्य **यतः**=गच्छतः सर्वदा परिणममानस्येत्यर्थः। जन्मादि गच्छत इति वा। ननु जातो देवदत्तो मृतो देवदत्त इति प्रतीतेः "तद्यथा अग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्व एत आत्मानो व्युच्चरान्ति" इति श्रुतेश्च स्वत एव जन्मादिमान् जीवोऽस्तु, नेत्याह—**इतरतश्चेति**। जन्माद्ययोग्यत्वादित्यर्थः। तथा च श्रुतिः—"न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित्" इति "अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे" इत्याद्या स्मृतिश्च जीवस्य जन्मविनाशौ वारयति। कृतहानाकृताभ्यागमादिदोषप्रसङ्गादुपाध्युत्पत्तिमात्रेणैव 'व्युच्चरन्ति" इत्यादिश्रुत्युपपत्तेः, "तद्गुणसारत्वात्" ब्र० सू० अ० २ पा० ३ सूत्र २९ ) इत्यादिन्यायाच्चेति चकारार्थः। देहमिन्द्रियं मनः प्राणं च केचिदात्मत्वेन प्रतिपन्नास्तान्निराकरोति—**अर्थेष्वभिज्ञ** इति। न हि भौतिकानां देहेन्द्रियप्राणमनसां ज्ञातृत्वं सम्भवति घटादावपि तत्प्रसङ्गात्; एतेषां चानित्यत्वात आत्मनित्यत्वस्य च व्यवस्थापितत्वात्। एतेन विभुत्वमपि व्याख्यातम्। विभुत्वं हि मध्यमपरिमाणत्वेनानुपपद्यमानं(१) परमाणुत्वे पर-

(१) तस्य निरवच्छिन्नपरिमाणत्वादिति भावः।

ममहत्त्वे वा व्यवतिष्ठेत् । एतेन देहाद्यतिरिक्तोऽपि देहपरिमाण एवात्मेति **क्षपणक**पक्षो निरस्तः । तत्र परमाणुत्वे सकलशरीरव्यापिसुखदुःखानुपलम्भप्रसङ्गात । सकलदेहव्यापकोऽस्तु तर्हि देहेन्द्रियातिरिक्तो विभुरेवात्मा ज्ञानाश्रयो न तु ज्ञानरूप इति, तत्राह—**स्वराडिति** । स्वयमेव राजत इति स्वराट् स्वप्रकाशज्ञानरूपो न तु ज्ञानाश्रय इत्यर्थः । "अत्रायं पुरुषः स्वयंज्योतिर्भवति" इत्यादिश्रुतेः । सन्देहविपर्ययाद्यविषयत्वेन सर्वदा भासमानत्वात्, स्वजन्यज्ञानविषयत्वे च कर्तृकर्मभावविरोधात् । "ज्ञोऽत एव" (अ० २ पा० ३ सू० १८) इतिन्यायात् ज्ञानरूप एवात्मेत्यर्थः । ननु जीवस्य स्वप्रकाशज्ञानरूपत्वे जन्मादिशून्यत्वे च ब्रह्मणो भेदकाभावात्स्वत एव च ब्रह्माभिन्नत्वे शास्त्रारम्भो निरर्थकः स्यात ब्रह्मावबोधस्य सर्वदा विद्यमानत्वादित्यत आह—तेने **ब्रह्म हृदा य आदिकवय** इति । **हृदा** मनसा तदुपाधिना तादात्म्यापन्नः सन् **अब्रह्म**=ब्रह्मविपरीतं कर्तृत्वभोक्तृत्वादिलक्षणं संसारं संसरणरूपं विस्तारितवान् । तथाच **श्रुतिः**—"स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव सधीः शन्नो भूत्वा" इत्याद्या सम्बन्धादसंसारिणोऽपि संसारितां दर्शयति । तथाच तन्निवृत्तये ब्रह्मात्मतोपदेशो युक्त इत्यर्थः । संसारस्य मोक्षहेतुतां दर्शयति—**आदिकवय** इति । आदिभूतं कं सुखं ब्रह्मानन्दरूपो मोक्ष इत्यर्थः । तस्य **वयः** प्राप्तिस्तदर्थम् अयवय गतौ इतिस्मरणात् । "निमित्तात्कर्मसंयोगे" चेयं सप्तमी 'चर्मणि द्वीपिनं हन्ति' इतिवत् । नहि संसाराभावे श्रवणमननादिसाधनानुष्ठानं सम्भवति, न च तदभावे तत्त्वज्ञानोदयः । न च तमन्तरेण अनाद्यविद्यानिवृत्तिरिति मोक्षार्थमेव संसारं विस्तारितवानित्यर्थः । तथा च **श्रुतिः**—'रूपंरूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणायेति" "मायाभिः पुरुरूप ईयते" इति च "ब्रह्म वा इदमग्र आसीत्" इति "आत्मानमेव वेदाहं ब्रह्मास्मि" इति "तस्मात्तत्सर्वमभवत्" इति च संसारद्वारा अविद्यानिवृत्तिरूपं मोक्षं दर्शयति । ननु तर्हि भवतु स्वप्रकाशज्ञानरूप आत्मा किन्तु नानन्दरूपः प्रतिशरीरं

भिन्नश्चेति साङ्ख्यमतं, तत्राह **मुह्यन्ति यत्सूरय इति**। यत् यत्र यस्मिन् जीवस्वरूपे **सूरयः**=तार्किकाद्यपेक्षया सुधियोऽपि **साङ्ख्या मुह्यन्ति** भ्राम्यन्ति शुद्धस्वरूपं जानन्तोऽपि आनन्दरूपत्वं प्रतिदेहमेकत्वं ब्रह्माभिन्नत्वं चाजानन्तः। तथा च **श्रुतयः**–"एष एव परम आनन्द" इति "एको देवः सर्व भूतेषु गूढ" इति "अयमात्मा ब्रह्मेति" तादृग्रूपतां जीवस्य बोधयन्ति। "तदेतत्प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयोऽन्यस्मात् सर्वस्मादान्तरं यदयमात्मा"इतिश्रुत्यन्तराच्च परप्रेमास्पदत्वादानन्दरूपत्वम्। नानात्वे भोगव्यवस्थानुपपत्तेः प्रतिदेहमेकत्वम्। नहि विभूनामात्मनां सर्वदेहसम्बान्धित्वाविशेषे कर्मादिकमपि भोगानियामकं भवितुमर्हति अविशेषात्। एकात्मवादे तु तदन्तःकरणावच्छिन्नप्रदेशानां भिन्नत्वादुपपद्यत एव व्यवस्था। देहभेदादेव च प्रतिसन्धानाभावः। एवं च भेदकशून्यत्वात् ब्रह्माभिन्नत्वमपि सिद्धं लक्षणैक्यात्। एवं त्वम्पदवाच्यार्थं पूर्वार्द्धेन प्रतिपाद्य तल्लक्ष्यमुत्तरार्धेन वक्तुमध्यारोपापवादन्यायेनारभते–**तेजोवारिमृदां यथा विनिमय** इत्यादिना। **यत्र** आत्मनि त्रयाणां स्थूलसूक्ष्मकारणोपाधीनां जाग्रत्स्वप्नसुषुप्त्यवस्थाहेतूनां **सर्गः**=संसर्गो मिथ्यैव न तु परमार्थतः। "स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवति" "असङ्गो ह्ययं पुरुष" इत्यादिश्रुतिभ्यः। साक्ष्यस्य साक्षिधर्मानुपपत्तेः भास्यस्य घटादेर्भासकदीपादिधर्मत्त्वादर्शनात्। मिथ्यात्वे दृष्टान्तः—**तेजोवारीति**। वारिणि करकारूपे मृद्बुद्धिः। एवं काचादिरूपायां मृदि तेजोबुद्धिरित्युदाहार्यम्। तथा चेदमनुमानं सूचितम्। आत्मनि जाग्रदादिबुद्धिर्मृषा तदभाववति तद्बुद्धित्वात् तेजसि वारिबुद्धिवत्। तदभाववत्त्वं चात्मनः श्रुतिस्मृतिन्यायैर्निश्चितमिति नासिद्धिः। एवं लक्षणैक्येन ब्रह्माभिन्नत्वं दर्शयति—**धाम्ना स्वेन सदा निरस्तकुहकमिति**। एतदेव तत्पदार्थत्वम्पदार्थतदैक्यकथनद्वारेण शास्त्रस्य विषयो दर्शितः। तत्र श्रवणमनननिदिध्यासनानां तृतीयं च निदिध्यासनमिह प्रतिपाद्यते:मनननिदिध्यासनवतो विजातीयप्रत्ययानिवारणस्य मनोनिग्रहद्वारा व्युत्पाद्यमानत्वात्। चतुर्लक्ष-

णमीमांसारूपत्वं चास्य सूचितम् । तथा हि पूर्वार्द्धेन "**जन्माद्यस्य यत**" (अ० १ पा० १ सू० २) इतिन्यायः साक्षादेव दर्शितः । **अन्वया-** दित्यनेन "तत्तु समन्वायात्" (अ० १ पा० १ सू०४) इति, **अर्थे- ष्वभिज्ञ** इत्यनेन "ईक्षतेर्नाशब्दम्" (अ० १ पा० १ सू० ५) इति, **तेने ब्रह्महृदे**त्यादिना "शास्त्रयोनित्वात्" (अ०१पा०१सू० ३) इति, **मुह्यन्ति यत्सूरय** इत्यनेन "एतेन सर्वे व्याख्याता व्याख्याता" (अ० १ पा० ४ सू० २०) इत्यन्तो न्यायकलापः सूचितः । इति समन्वयाध्यायो व्याख्यातः । **तेजोवारिमृदामित्यादिना** "तदनन्यत्वमारम्भणशब्दादिभ्य" (अ० २ पा० १ सू० १४) इत्या- दिन्यायसूचनादविरोधाध्यायार्थः, **धीमहीत्यनेन** "सह कार्यान्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्" (अ० ३ पा० ४ सू० ४७) इत्यादिन्यायसूचनात् साधनाध्यायार्थः। **धाम्ना स्वेन सदा निरस्तकु- हकं सत्यं परमिति** फलाध्यायार्थः अविद्यातत्कार्यनिवृत्त्युपलक्षि- तपरमानन्दरूपावशेषात् । एवं सति पारमहंसी संहितेति समाख्योपपद्य- ते । परमहंसानां वेदान्तवाक्यार्थनिदिध्यासनरूपत्वादत्रत्योपाख्यानानां तत्तात्पर्यकत्वात् । एवं ध्यायेमेतिपदस्थाने धीमहीति छान्दसप्रयोगात् गाय- त्रीरूपत्वमस्याः सूचितम् । तत्सवितुर्वरेण्यमित्यस्यार्थः **स्वराडित्यनेन** सूचितः । भर्गो देवस्य धीमहीत्यस्यार्थः **जन्माद्यस्य यत** इत्यादिना सूचितः । धियो योनः प्रचोदयादित्यस्यार्थः **तेने ब्रह्म हृदे**त्यादिना सूचितः । तथा च गायत्रीवदनिशं जप्तव्यैषा संहितेति दर्शितम् । लक्षणं च श्रीभागवतस्य सूचितम् । तथा च **मत्स्यपुराणे** पुराणदानप्रस्तावे-

यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः ।
वृत्रासुरवधोपेतं तद्वै भागवतं विदुः ॥

इतिगायत्र्युपक्रमो लक्षणत्वेनोक्तः । एवं च सर्गादीन्यपि दश लक्ष- णानि अनेन श्लोकेन सूचितानि—**जन्माद्यस्य यतः**—इत्यनेन सर्ग- विसर्गस्थानानि तृतीयचतुर्थपञ्चमस्कन्धव्युत्पाद्यानि सूचितानि । **तेने**

**ब्रह्म हृदा य आदिकवय** इत्यादिना भक्तानुग्रहलक्षणं पोषणं षष्ठ-स्कन्धव्युत्पाद्यं सूचितम् । **मुह्यन्ति यत्सूरय** इत्यनेन कर्मवासनारूपा ऊतिः सप्तमस्कन्धव्युत्पाद्या सूचिता । मन्वन्तरेशानुकथे अष्टमनवमस्कन्ध-प्रमेये स्थानमध्य एवान्तर्भूते । **तेजोवारिमृदां विनिमय** इत्यनेन निरोधो दशमस्कन्धार्थो दर्शितः । **धाम्ना स्वेन सदानिरस्तकुहक**-मित्यनेन मुक्तिरेकादशस्कन्धार्थो दर्शिता । **सत्यं पर**मित्यनेनाश्रयो द्वादशस्कन्धार्थो दर्शितः । **धीमही**त्यात्मनेपदोत्तमपुरुषप्रयोगादधिकारी प्रथमस्कन्धार्थः । तेनैव ध्यानोपलक्षितसाधनाऽनुष्ठानरूपो द्वितीयस्कन्धा-र्थ इतिकृत्स्नभागवतार्थसूचनम् । तदेतत् व्याख्यानमौपनिषदाय रोचते ।

**सात्वतास्तु** वर्णयन्ति —पञ्चीकृतपञ्चमहाभूतोपहितं शुद्धचै-तन्यं तदभिमानि विराडन्तर्यामिरूपं ओतम् इत्यनिरुद्ध इति चाख्यायते । एवमपञ्चीकृतपञ्चमहाभूतोपहितं शुद्धचैतन्यं तदभिमानि हिरण्यगर्भान्त-र्यामिरूपम् अनुज्ञात इति प्रद्युम्न इति चाख्यायते । एवं स्थूलसूक्ष्म-कारणीभूतं यन्मायात्मकमव्याकृतं तदुपहितं शुद्धं चैतन्यं तन्निष्ठचिदाभा-सोपलक्षितम् अनुज्ञा इति सङ्कर्षण इति चाख्यायते । अनुपहितं तु चैतन्यं सर्वानुस्यूतसन्मात्रं सर्वसाक्षिपरमानन्दघनम् अविकल्प इति वासुदेव इति चाख्यायते । सङ्कर्षणप्रद्युम्नानिरुद्धानामपि वासुदेवत्वं वर्तत एव । उपाधिकृतः केवलं नामविशेषः । एतच्च **नृसिंहतापनीयोत्तरभागे** व्याख्यायते ओतानुज्ञातानुज्ञाविकल्पैः स्थूलसूक्ष्मबीजसाक्षिभिरिति बहु-कृत्वोऽभ्यासेन । अत्र च वासुदेवः परमात्मा सङ्कर्षणो जीवः प्रद्युम्नस्तु मनः अनिरुद्धोऽहङ्कार इति पाञ्चरात्रिकप्रक्रिया नादरणीया तद्वचनविरो-धात् श्रुतिविरोधाच्चेत्यादि "उत्पत्त्यसम्भवात्" (अ० २ पा० २ सू० ४२) इत्यधिकरणे व्याख्यातम् । केवलं परमात्मैवानुपहितो वासुदेवः का-रणोपहितः सङ्कर्षणः सूक्ष्मभूतोपहितः प्रद्युम्नः स्थूलभूतोपहितो-ऽनिरुद्ध इतियथाव्याख्यानमेवादरणीयम् । श्रौतत्वादुपपन्नत्वाच्च । एवं स्थिते श्लोकयोजना । **परं सत्यं** वासुदेवाख्यं वयं **धी**-

**महि**=उपास्महे । ध्यानमत्रोपासनरूपमेवाभिप्रेतम । चतुर्व्यूहरचनाया उपासनार्थत्वात् । नन्वनुपहितस्य वासुदेवस्य बुद्धावनारोहात् कथमुपास्यत्वम् । सत्यम् । अनिरुद्धादिरूपमप्यविवक्षितोपाधिसम्बन्धं वासुदेवात्मकमेव । श्रोत्रकूपद्वारादिकमिवालक्षिततदुपाधिसम्बन्धमाकाशात्मकमेव । विवक्षितोपाधिसम्बन्धे तु पृथग्व्यपदेशभेदं लभते न तु तावता वस्त्वन्यत्वं भवति । तथा च तद्द्वारा वासुदेवे मनोवृत्तिः कार्येति वक्तुमारभते–**जन्माद्यस्य यत** इत्यादिना । अस्य जगतः चतुर्दशभुवनरचनात्मकस्य ब्रह्माण्डस्य **जन्मादि** विकारजातं **यतो** भवति तं धीमहीति सम्बन्धः । तस्य जगद्विरचनयोग्यतामाह–**अर्थेष्वभिज्ञ** इति । ब्रह्माण्डाभिमानिविराडपेक्षया वैलक्षण्यमाह=–**स्वराडिति** । ब्रह्माण्डावच्छिन्नचिदाभासो हि विराड्जीवः, अयं तु तद्बिम्बभूतस्तदन्तर्यामी स्वयमेव राजत इति स्वराट् बिम्बभूतत्वेनान्यानपेक्षत्वात् । एवमनिरुद्धमोतमुक्त्वा प्रद्युम्नमनुज्ञातमाह=**तेने ब्रह्म हृदा य आदिकवय** इति । **आदिकवये**=सूक्ष्मभूतावच्छिन्नचिदाभासाय हिरण्यगर्भसंज्ञकाय जीवाय **ब्रह्म**=वेदं तदन्तर्यामिरूपेण बिम्बभूतो यस्तन्मनसैव तेने इति हिरण्यगर्भवैलक्षण्यं स्पष्टमेवोक्तम् । सङ्कर्षणरूपतामाह=–**मुह्यन्ति यत्सूरय** इति । **यत्**=यत्र त्रिगुणात्मकमायाप्रतिबिम्बस्य जगत्कारणस्य बिम्बभूते सर्वान्तर्यामिणि सङ्कर्षणाख्ये सूरयोऽपि **भ्राम्यन्ति**=स्थूलसूक्ष्मद्वयप्रपञ्चं भ्रान्त्या कल्पयन्ति प्रधानपरमाण्वादिरूपेण वा भ्राम्यन्ति । वासुदेवरूपतामाह—**तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषेति** । त्रिविधः सर्गः **त्रिसर्गः** आध्यात्मिक आधिदैविक आधिभौतिकश्चेति स **यत्र मृषा** सर्वथा असन्नेवेत्यर्थः । अपह्नववचनो मृषाशब्दः । त्रयाणामनिरुद्धप्रद्युम्नसङ्कर्षणोपाधीनां **सर्गः**=संसर्गो यत्र मृषेति वा । तदेवमुपहितत्वे । अनुपहितत्वे **स्वेन धाम्ना सदा निरस्तकुहकं** निरस्ताविद्यातत्कार्यबिम्बभूतत्वेनोपाधितद्धर्मैरसंस्पृष्टम् । अत एव परं सत्यं वासुदेवाख्यं ध्यायेमेति निर्गलितोऽर्थः । अत्रानिरुद्धपुरुषावतारो ना-

रायणः प्रलयोदकशायी भुवनकमलमूलभूत इति सविस्तरं मूल एव व्यक्तीभविष्यति । इतरेषामपि रूपं वक्ष्यते। विस्तरश्चास्याः प्रक्रियाया मोक्षधर्मे नारायणीयोपाख्यान इति । तदेतद् व्याख्यानं पौराणिकाय रोचते।

**केवलभक्तिरसिकास्तु**-केवलवासुदेवावतारश्रीकृष्णपरतया योजयन्ति सङ्कर्षणप्रद्युम्नानिरुद्धानां स्वसमाख्ययैव पृथगवतीर्णत्वात् वासुदेवावतार एव श्रीकृष्णः कार्ष्णेयाध्यात्माद्युपाख्यानेष्वपि तथैव प्रतिपाद्यते इहाऽपि "कृष्णस्तु भगवान् स्वयम्" इति। तस्मात्तत्परतयैव सर्वाणि पदानि योजनीयानि । तं परं सत्यं वासुदेवात्मकं श्रीकृष्णं वयं ध्यायेम । तस्य सर्वप्रेमास्पदत्वेन ध्येयतामाह—**जन्माद्यस्य यत** इति । **यतः** श्रीकृष्णात् यस्मिन् श्रीकृष्णे वा **आद्यस्य**=रतिभावस्य प्रेमाख्यस्य **जन्म** भवति सर्वेषामितिशेषः । रतिभावस्य चाद्यत्वम्—

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ॥

इति **भरतेनादौ** पाठात्। सर्वप्राणिरतिविषयत्वं च परमानन्दरूपत्वात्। तथा च वक्ष्यति 'त्रैलोक्यसौभगमिदं च निरीक्ष्य रूपं यद्गोद्विजद्रुममृगाः पुलकान्यबिभ्रन्" इति । दुर्वाससा चात्मकत् त्वं सर्वप्राणिनां प्रियो भवेति वरो दत्त इति शान्तिपर्वणि दानधर्मेषु पठ्यते । प्रेमाख्यस्य रतिभावस्योत्पत्तौ कारणमाह—अन्वयादितरतश्चेति । **अन्वयः** सन्निकर्षः **इतरो** विप्रकर्षश्चेति ताभ्याम्। तथा च वक्ष्यति—

गोपानां परमानन्द आसीत् गोविन्ददर्शने ।
क्षणं युगशतमिव यासां येन विनाभवत् ॥ इति ।

यर्ह्यम्बुजाक्षापससार भो भवान् कुरून् मधून् वाऽथ सुहृद्दिदृक्षया ।
तत्राब्दकोटिप्रतिमः क्षणोऽभवद्रविं विनाक्ष्णोरिव नस्तवाच्युत !॥ इति ।

तथा सन्निकर्षविप्रकर्षाभ्यां ज्ञायमानो रतिभावः स्थायी तद्विषयः श्रीकृष्णो भक्तिरसावलम्बनं विभाव इत्यर्थः । विस्तरेणैव चैतद्वक्ष्यते । ननु तस्मिन् जायमानोऽपि प्रेमा निरर्थकः, तेनाज्ञानात्, राजादिषु प्रेमा-

परिज्ञानेन विपरीतकार्यस्यापि दर्शनादित्यत आह--**अर्थेष्वभिज्ञ इति**। सर्वेष्वर्थेषु मनोवृत्त्यादिरूपेषु **अभि**=सर्वप्रकारेण **ज्ञः**। एवंच सार्वज्ञ्यान्नास्त्ययत्नकृतं वैयर्थ्यम्। प्रेमपरिज्ञानेऽपि तदाश्रयजनोपकारासामर्थ्यमाशङ्कयाह--**स्वराडिति**। स्वतन्त्रः सर्वशक्तिरित्यर्थः। शक्तिह्रासे हि पारतन्त्र्यं स्यात्। तथा च न असामर्थ्यकृतं वैयर्थ्यम्। ननु गोपालकस्य कथं सर्वज्ञत्वं सर्वशक्तित्वं चेत्यत आह—**तेने ब्रह्म हृदा य आदिकवय इति। आदिकवये**=ब्रह्मणे वत्साहरणद्वारा स्वरूपजिज्ञासवे **ब्रह्म**=निजरूपं सत्यज्ञानादिलक्षणं सर्वशक्ति च **यः तेने**=विस्तारितवान् प्रदर्शितवान् तदपि **हृदा** सङ्कल्पमात्रेणैवेत्यर्थः। तथा च वक्ष्यति--

तत्रोद्वहत्पशुपवंशशिशुत्वनाट्यं ब्रह्माद्वयं परमनन्तमगाधबोधम्।
वत्सान् सखीनिव पुरा परितो विचिन्वदेकं सपाणिकवलं परमेष्ठ्यचष्ट।
इत्यादि।

ननु ब्रह्मा स्वयमेव जानाति सर्वज्ञत्वात् किं तदनुज्ञापनेनेत्यत आह-**मुह्यन्ति यत्सूरय इति**। **यत्**=यत्र श्रीकृष्णस्वरूपे **सूरयो**=ब्रह्मादयो **मुह्यन्ति**=इदमित्थमिति निश्चयं कर्तुं न शक्नुवन्ति तन्मायायाः सर्वमोहकत्वात्। तथा च भगवतोक्तं **गीतासु**—

नाहं प्रकाशः सर्वस्य योगमायासमावृतः।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम्॥ इति।

ब्रह्मणो मोहे हेत्वन्तरं वदन् कारुणिकत्वं दर्शयति-**तेजोवारिमृदामित्यादिना**। ब्रह्मणा वत्सेषु तत्पालकेषु तदुपकरणशिक्यादिषु च स्वसृष्टेषु भौतिकेष्वपहृतेषु **यत्र**=श्रीकृष्णे **त्रिसर्गः**=त्रयाणां वत्सतत्पालकतदुपकरणानां **सर्गः** प्रादुर्भावो जात इति शेषः। तत्र दृष्टान्तः **तेजोवारिमृदां** यथा **विनिमय** इति। त्रिवृत्कृतो भूतारब्धो यथा ब्रह्मणा कृतो वत्सतत्पालकतदुपकरणरूपः सर्गः तथैव भगवता कृतः। सच्चिदानन्दस्वरूपत्वेनाभौतिकोऽपि भौतिकवद्दृश्यत इत्य

र्थः । तथाच वक्ष्यति—

> एवमेतेषु भेदेषु चिरं ध्यात्वा स आत्मभूः ।
> सत्याः के कतरे नेति ज्ञातुं नेष्टे कथञ्चन ॥ इति ।

तथा च के मया सृष्टा भौतिकाः के च भगवता सृष्टा अभौतिका इति निर्णयासामर्थ्ये च ब्रह्मणो मोहो युक्त इत्यर्थः । ननु भगवता किमित्यन्ये सृष्टा ब्रह्मणा कृतानामेव आनेतुं शक्यत्वात् इत्यत आह **मृषेति** । मर्षणं **मृषा** सहिष्णुतारूपा क्षमेत्यर्थः । मृष क्षमायामितिस्मरणात् । तथा च वक्ष्यति—

> ततः कृष्णो मुदं कर्तुं तन्मातॄणां च कस्य च ।
> उभयायितमात्मानं चक्रे विश्वकृदीश्वरः ॥ इति ।

तेषामानयने ब्रह्मणोऽसम्मोषः तदन्येषां तत्तुल्यानां करणे तद्बन्धूनामिति विचार्य परमकारुणिकेन भगवता अन्ये सृष्टा इत्यर्थः । ननु महामायेन ब्रह्मणा विहितां मायां कथं कृष्णो ज्ञातवान् ज्ञात्वा च किमिति क्षन्तवान् एतादृशेऽपराधे कोपस्योचितत्वादित्याशङ्क्याह- **धाम्ना स्वेन सदा निरस्तकुहकमिति** । निरस्तं नितरां निराकृतं कुहकं कपटं ब्रह्मणा कृतं मोहनं तन्निमित्तकोपादिकं च येन इति तथा तम् । तत्र हेतुः **धाम्ना स्वेन सदेति** । स्वरूपेण आत्मतत्त्वेन इनरूपेण प्रभुत्वेन सर्वनियामकत्वेन सदनं **सत्**=अवस्थानं स्वेन सत्तया धाम्ना तद्रूपेण प्रभावेणेत्यर्थः । तथाचान्तर्यामित्वात्परिज्ञानम् आत्मत्वाच्च क्रोधाभाव इति सर्वमनवद्यम् । एवं च सर्वप्रियत्वेन परमानन्दरूपः सर्वज्ञः सर्वशक्तिः सर्वमोहनः सर्वसुखप्रदः सर्वापराधसहिष्णुः सर्वात्मा परमकारुणिको विदग्धतरश्च श्रीकृष्णो भक्तिरसालम्बनत्वेन सम्पूर्णग्रन्थप्रतिपाद्य इति ध्वनितम् । विशेषणद्वारा विशेष्योपस्थितिश्चालङ्कारिकाय रोचतेतराम् । साक्षादनभिधानं च अतिरहस्यत्वात् । अर्थभेदः कथंचनप्रतिपत्तॄणां विचित्रप्रज्ञानां विनोदायेत्यलमतिविस्तरेण । भक्तिरसानुभवप्रकारश्च सर्वोऽप्यस्माभिर्भक्तिरसायन अभिहितः । अत्रापि कियान् वक्ष्यते ॥ १ ॥

इति श्रीमधुसूदनसरस्वतीकृता श्रीमद्भागवतस्यादिमश्लोकस्य व्याख्या ।

७१ (१) ब्रह्मसूत्रशाङ्करभाष्यम्। चतुःसूत्र्यन्त पूर्णानन्दीय व्याख्या सहितया श्रीगोविन्दानन्द प्रणीतया रत्नप्रभया समन्वितम्। द्वितीयाध्यायस्य द्वितीयपादान्तो प्रथमोभागः। [ वेदान्तविभागे ९ ] रु० २—८

७१ (२) ब्रह्मसूत्रशाङ्करभाष्यम्। श्री गोविन्दानन्द प्रणीतया रत्नप्रभया समन्वितम्। द्वितीयाध्यायस्य तृतीयपादमारभ्य समाप्तिपर्यन्तम्। द्वितीयोभागः। [ वेदान्त वि० ९ ] रु० २—८

७२ [१]–सिद्धान्तशिरोमणिः। श्रीभास्कराचार्य विरचितः। "गणिताध्यायः" वासनाभाष्य सहितः ज्योतिषाचार्य म० म० श्री ६ बापूदेवशास्त्रिकृतटिप्पणी सहितः। [ ज्यो० वि० ४ ] रु० २—०

७२–[२]–सिद्धान्तशिरोमणिः। " " "गोलाध्यायः" वासनाभाष्य सहितः। ज्योतिषाचार्य म० म० श्री ६ बापूदेवशास्त्रि कृत टिप्पणी सहितः। [ ज्यो० वि० ४ ] रु० २—०

७३ काकचण्डीश्वरकल्पतन्त्रम्। पण्डित रामकृष्ण शर्म्मणा सम्पादितम्। पण्डित बटुकनाथ शर्म्मा एम. ए. साहित्योपाध्याय इत्येतेन लिखितया प्रस्तावनया सनाथीकृतम्। [ आयुर्वेद शास्त्रविभागे १ ] रु० ०—८

७४ किरातार्जुनीयम्। श्रीमत्कविकुलचूडामणिभारविविरचितम् मल्लिनाथसूरिकृतया घण्टापथसमाख्यव्याख्यया तथा पं० श्रीगङ्गाधरशर्मणा कृतया सुधाऽऽख्यव्याख्यया समलङ्कृतम्। [ सर्गत्रयमात्रम् ]। [ काव्य वि० १० ] रु० ०—१२

७५ चन्द्रालोकः। पीयूषवर्षश्रीजयदेवकवि प्रणीतः। श्रीमत्पद्मनाभमिश्रापराभिधान प्रद्योतनभट्टाचार्य विरचितया चन्द्रालोकप्रकाशापराख्य 'शरदागम' टीकया सङ्कलितः। साहित्याचार्येण खिस्ते इत्युपाख्यनारायणशास्त्रिणा भूमिकादिभिः सम्भूष्य सम्पादितः। [ अलङ्कार वि० ३ ] रु० ०—१०

७६ किरातार्जुनीयम्। श्रीमत्कविकुलचूडामणिभारविविरचितम्। मल्लिनाथसूरिकृतया घण्टापथसमाख्यया तथा पं० श्रीकनकलालशर्मणा कृतया भावार्थदीपिनीव्याख्यया समलङ्कृतम्। [ सर्गत्रयमात्रम् ] [ काव्य वि० ११ ] रु० ०—६

७७ शक्तिवादः, श्रीगदाधरभट्टाचार्यप्रणीतः, पण्डितप्रवरश्रीहरिनाथतर्कसिद्धान्तभट्टाचार्यविरचितविवृतिसहितः। [ न्यायविभागे १० ] रु० ३—०

७८ माथुरीपञ्चलक्षणी। पं श्रीउमानाथज्यौतिककृतव्याख्या सहिता तथा माथुरीसिंहव्याघ्रलक्षणम्। पं० श्रीहरिरामशुक्ल विरचितया व्याख्यया सहितं तथा पं० श्रीहरिहरशास्त्रि सङ्कलित माथुरीपञ्चलक्षणी क्रोडपत्रेण च। [न्याय वि० ११] रु० ०—६

७९ रसाध्यायः। टीकया संवलितः। [ आयुर्वेदशास्त्र वि० २ ] रु० ०—१०

८० (१) पाणिनिव्याकरणे वादरत्नम्। न्यायव्याकरणाचार्य मीमांसक शिरोमणि पं० सूर्यनारायणशुक्लेन विरचितम्। ( तत्र च न्यास परिष्कारपरिशिष्ट भेदेन प्रकरणत्रयम् यत्र पञ्चन्यून सार्धशतसूत्रेषु १४५ महताटोपेन न्यासाविचारताः तत्र प्रथमं प्रकरणं मुद्रितं प्रथमो भागः। [ व्या० वि १० ] रु० १—८

८० (२) पाणिनीव्याकरणेवादरत्नम्। द्वितीयोभागः [ व्या० वि० ] रु० १—४

८१ गणितकौमुदी। [ हिन्दीभाषाटीकासहिता ] प्रथमापरीक्षापाठ्यनिर्द्धारितगणितसंग्रहपुस्तकम्। [ गणितविभागे १ ] रु० ०—६

८२ छन्दः कौमुदी। [ हिन्दीभाषाटीकासहिता ] प्रथमापरीक्षापाठ्यनिर्द्धारितछन्दःसंग्रहपुस्तकम्। [ छन्दोविभागे ३ ] रु० ०—१

८३ योगदर्शनम्। महर्षिप्रवरपतञ्जलिप्रणीतम्। तत्र ( १ ) भोजवृत्तिः, [ २ ] भावागणेशवृत्तिः, [३], नागोजीभट्टवृत्तिः, [४] मणिप्रभा, [५] योगचन्द्रिका, [६] योगसुधाकराख्य टीका षट्कसमेतम्। सटिप्पण। [ योग० विभागे १ ] रु० २—०

८४ रघुवंशमहाकाव्यम् । श्रीकालिदासविरचितम् । म० म० मल्लिनाथकृत सञ्जीविनीटीका तथा परीक्षोपयोगि सुधाऽऽख्यव्याख्या सहितः। १ से ४ सर्गः मूल्यम् रु० १-४-० तथा १ से ५ सर्गः रु० १—८ तथा ६ से १० सर्गः। रु० १—८

८५ योगदर्शनम् । पं० श्रीबलदेवमिश्रकृत योगसूत्रप्रदीपिकाख्यव्याख्यया सहितम् । सटिप्पण । [ योग वि० २ ] १—०

८६ काव्यमीमांसा । राजशेखरविरचिता । साहित्याचार्य पं० श्रीनारायणशास्त्रि खिस्ते कृत काव्यमीमांसा—चन्द्रिका टीका सहित [ १ से ५ अध्याय ] प्रथमो-भागः । [ काव्यविभागे १३ ] रु० ०—८

८७ नागानन्दनाटकम् । श्रीहर्षदेवप्रणीतम् । काशीविश्वविद्यालयाध्यापकेन एम० ए० साहित्याचार्य पण्डित श्री बलदेव उपाध्यायेन स्वप्रणीतया भावार्थदीपिकाख्यया व्याख्यया समलङ्कृत्य वृहत् भूमिका हिन्दीभाषानुवादादिभिः सनाथीकृत्य सम्पादितम् । [ नाटक विभागे १ ] रु० १—४

८८ मेघदूतकाव्यम् । महाकवि श्रीकालीदास विरचितम् । मल्लिनाथकृत सञ्जीविन्या, चारित्रवर्द्धनाचार्य विरचित चारित्रवर्द्धिन्या तथा साहित्याचार्य पं० श्री नारायण-शास्त्री खिस्तेकृत भावप्रबोधिनीव्याख्या टिप्पण्या च सहितम् । [काव्य० १४] रु० ०—८

८९ जागदीशीव्यधिकरणम् । न्यायाचार्यश्रीशिवदत्तमिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितम् । ( न्यायविभागे १२ ) रु० २—०

९० काव्यकल्पलतावृत्तिः । श्रीअमरचन्द्रयतिनिर्मिता अरिसिंहकृतसूत्रसहिता । ( अलङ्कारविभागे ४ ) रु० १—४

९१ वैयाकरणसिद्धान्तचन्द्रिका । श्रीरामाश्रमप्रणीता । श्रीसदानन्दकृत-सुबोधिन्या, श्रीलोकेशकरकृत-तत्त्वदीपिकया व्याख्यया च सहिता । पं० श्रीनयकिशोर-शास्त्रिणानिर्मितया चक्रधराख्य महत्या टिप्पण्या अव्ययार्थमालया लिङ्गानुशास-नप्रक्रियया उणादिकोषेण च सहिता । ( व्या० वि० ११ ) पूर्वार्द्धम् । रु० २—८ उत्तरार्द्ध । रु० २—८

९२ त्रिपुरारहस्यम् ( महात्म्यखण्डम् ) साङ्ख्ययोगशास्त्राचार्य श्रीमुकुन्दलाल शा-शास्त्रिणा संशोधितम् । साहित्याचार्य खिस्ते-इत्युपाख्य पं० श्रीनारायणशास्त्रिणा निबद्धाभ्यां भूमिकाऽध्यायानुक्रमणिकाभ्यां च सहितम्।(पुराणेतिहास वि०१) रु० ५—०

९३ आपस्तम्बधर्मसूत्रम् । श्रीमद्धरदत्तमिश्र विरचितया उज्ज्वलाख्यया वृत्त्या संवलितम् । ( कर्मकाण्डविभागे ७ ) रु० ४—०

९४ अवच्छेदकत्वनिरुक्तिः । श्रीजगदीशतर्कालङ्कारकृताः । न्यायाचार्य श्रीशिवदत्त-मिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितः । ( न्याय वि० १३) रु० १—४

९५ संस्कारदीपकः । गणेशपूजादिमहयागान्त-पूर्वाङ्ग-निरूपणात्मकः प्रथमो भागः । म० म० पण्डित श्रीनित्यानन्दपन्त पर्वतीयविरचितः । ( कर्मकाण्ड वि० ८ ) रु० २—०

९६ वर्षकृत्यदीपकः । कालनिर्णयव्रतोद्यापनसहितः । म० म० पं० नित्यानन्दपन्त पर्वतीय विरचितः । ( कर्मकाण्ड वि० ९ ) रु० ३—८

९७ श्रौतसूत्रम् । श्रीमन्महर्षि-लाट्यायनप्रणीतमग्निष्टोमान्तम् । (कर्म० वि० १०) रु० २—०

९८ नलचम्पूः अथवा दमयन्तीकथा । महाकविश्रीत्रिविक्रमभट्टविरचिता । विषमपद-प्रकाशाख्यव्याख्यया सहिता । भावबोधिनी टिप्पणी सहिता । (का० वि०१५) रु० १-४

९९ श्रीब्रह्मसूत्रम् । श्रीभगवन्निम्बार्क महामुनीन्द्रविरचित वेदान्तपारिजात सौरभा-ख्यसूत्रव्याख्यान श्रीश्रीनिवासाचार्यचरणप्रणीत श्रीवेदान्तकौस्तुभभाष्येण च सनाथीकृतम् । ( श्रीनिम्बार्कभाष्यम् ) ( वेदान्त वि० १० ) रु० ३—०